ॐ श्रीगणेशायनमः ॥ ॐनमस्त्रिपुरसुंद
र्यै ॥ भगवन्सर्ववेत्तात्वं जगतामुपकारकः
देवेभ्योदेवदेवेभ्यः त्रैलोक्याभयदायकः
पुरासुरासुरसंग्रामे महान्दत्तोवरस्त्वया
त्वमद्यकृपयाप्यंभो संप्रदातुंत्वमोभव ~
श्रीभैरवः ~ देविसत्यंवरोदत्तो देवदान
वसंगरे यत्तेमनःसमीहितं तंब्रूददेविसु
व्रते ~ श्रीदेवी ~ भगवन्सर्वधर्मज्ञ सक ~

लागमपारग देवदेवीमहादेवी महात्रि
पुरसुंदरी त्रिकूटाख्योड्ड्पीदेव श्रीविद्या
ब्रह्मरूपिणी तस्याःपंचांगमखिलं सारा
त्सारोत्तमोत्तमम् वदश्रीत्र्यंमहादेव य
द्यहंप्रीयसीतव ॥ श्रीभैरवः ॥ लक्षवा
रसहस्राणि वारितासिपुनःपुनः स्त्री
स्वभावान्महादेवि तवप्रीत्यामहेश्वरि म
श्री० हात्रिपुरसुंदर्योः पंचांगंतुब्रवीम्यहम्
२

श्रीविद्यात्रिपुरादेवी जगच्चैतन्यरूपिणी-
त्रिकूटाषोडशीविद्या महाश्रीषोडशाक्ष
री यादेवदेवीजगतां स्थितिसृष्टिलया-
त्मिका सामहाषोडशीविद्या महात्रिपु
रसुंदरी - राज्यंदेयंशिरोदेयं देयंसकल
मर्थिने वस्तुपूर्णंसहंदेयं नदेयाषोड
शाक्षरी गोप्यंगोप्यतमांविद्या गुप्तांव
पुरजन्मनाः गुह्यातिगुह्यांगोप्तव्यां सा

धकाग्रेनगोपयेत्तू कालविद्यामहाविद्या
प्रभावसहिताकलौ व्यवस्थारूपिलीवि
द्या बालाप्रौढजरात्तुरा व्यक्तरात्रिपुरा
बाला प्रौढापंचदशाक्षरी देविविकूटा
श्रीविद्या महाश्रीषोडशाक्षरी महाश्री
षोडशाक्षर्याः पंचांगंवक्ष्मिसादरमू
महाश्रीषोडशाक्षर्या मंत्रोद्धारंब्रवीम्य
श्री. हम्॥ यंत्रोद्धारंतथाध्यानं प्रयोगानह
२

वक्ष्यहम्~ अत्रादौमंत्रोद्धारः॥ लक्ष्मींपरा
मदनवाग्भवशक्तियुक्ता तारंचमूर्तिकम
ला कथितापिविद्या शाक्तयादिकंतुविप
रीततयाचप्रोक्ता श्रीषोडशाक्षरविधिः
शुभदोस्तुपूर्णः अस्यांश्रीषोडशाह्वयो~
अन्यदोषोनविद्यते मंत्रोकीलनदोषोवा~
मंत्रसंजीवनस्यच संपुटस्यविनादेवि पु
रश्चरणकर्मणा गुरुहस्तेनवादेवि साध

कस्यकरेणवा पुरश्चर्यांप्रकुर्वीत वल्लोल
ल[illegible]पावधिं नकदाचित्प्रकुर्वीत स्वहस्ते
नचसाधकः नतिथिर्नेचनक्षत्रं नांग-
न्यासश्चमंत्रिणाम् नवारदोषोनोविघ्नो
नाप्योचंनियमोनच साक्षादमृतरूपोयं
मंत्रःश्रीषोडशाक्षरः ऋषिस्स्याद्दक्षि
णामूर्तिः पंक्तिश्छंदउदाहृतम् देवताच
श्री· मयाप्रोक्ता महात्रिपुरसुंदरी लक्ष्मीर्बी
२

जं [illegible]मामूर्त्तिः कामराजं तु कीलकम् चतु
र्वर्गेषु विद्यायां विनियोगः प्रकीर्त्तितः~
इति मंत्रोद्धारः ॥ अथ यंत्रं प्रवक्ष्यामि स
र्वाशापरिपूरकम् सर्वसंमोहनं यंत्रं~
सर्वसिद्धिप्रदायकम् ~ बिंदुत्रिकोण
वसुकोणदशारयुग्मं मन्वश्रनागदल
संगतषोडशारं वृत्तत्रयं च धरणीस
दनं [illegible] अथ च [illegible] श्रीचक्रमेतदुदितं परदेव~

नाय: इतियंत्रोद्धार: ॥ अथ ध्यानं प्रव-
क्ष्यामि सर्वतंत्रेषु गोपितं सारं त्रिपुरसौन्द
र्यो: सर्वस्वं मम पार्वति सूर्यकोटिसमा
नाभं चतुर्बाहुं त्रिलोचनाम् पाशांकुशा
धराम्ब्रायं धारयन्तीं त्रिकिवाम्भजे ॥ इतिध्या
नं ॥ अथ प्रयोगा: ॥ प्रयोगान्प्रवक्ष्ये
हं श्रीशैपर्वतनंदिनि उपचारं ब्रवीम्यद्य ॥
श्री॰ नचारव्यायं दुरात्मने स्तम्भनं मोहनंचैव ॥
ष

मारणकर्मएतथा वशीकारंतथोच्चाटं

शान्तिकंपौष्टिकंतथा एतेषांसाधनंव

त्ये जगतांहितकाम्यया अभक्तायन

दातव्यं नद्रष्टव्यंकदाचन रवौउन्याय

श्वायना दत्वाप्रेतगृहांतिकम् मूलंसा

धकएवाशु जपेदयुतसंख्यया होमो

जातीफलैःपीतैः पुष्पैश्चघृतमिश्रितैः

शत्रुसैन्यादिदस्यूनां वादिनांस्तम्भनंभ

वेत् १ सोमेमध्याह्नसमये स्नात्वाकूप-
जलेनतु कूपांतिकेमनुंजप्त्वा साधको
युतसंख्यया होमयेद्धुतमिश्रंच माहि
षंदधिघृतकैः भस्मनातिलकंकुर्यात्
मोहयेद्भुवनत्रयम् २ भौमे,र्धरात्रसम
ये चतुष्पथगतःसुधीः प्रयुतंतुजपे
न्मूलं होमयेद्धुतपायसं रक्तचंदनमि
श्री० श्रंच स्त्रीकेशैस्समन्वितं प्रातुःकाल
५

समानोपि मृत्युमेष्यतिनान्यथा॥ २
कृष्णे निशायां मसाने तु गत्वा शून्यालयं जपे
दयुतं मूलमंत्रं तु होमयेद्भूतप्राकं रं क
र्णिकार सहस्राणि बिल्वयुक्तानि पार्व
ति रंभाद्याप्सरसां वापि भवेदाकर्ष
णं ध्रुवम्॥ गुरौ सूर्योदये गत्वा नदीत्ती
रं हि साधकः मूलमंत्रं महादेवि जपे
दयुत संख्यया होमः सर्पिर्दधित्तीर॥

मृद्वीकामालतीयुतैः श्रीफलैस्सहसादे
वि वश्यायेभुवनत्रयम् ४ शत्रोर्निशा
मुखेगत्वा वटमूलेजपेन्मनुं प्रयुतंसा
धकोभक्त्या होमःकार्यस्तुसर्पिषा दध्ना
द्रात्ताविमिश्रेण गोमूत्रेणचपायसैः
शत्रोर्मन्त्रस्टशास्यापि भवेदुच्चाटनंध्रु
वम् ५ ६ शत्रोप्रभातसमये कृत्वाकर्मा
ह्निकंसुधीः प्रागत्याचेनशाय्यांतु ज

श्री.
६

पेन्मंत्रायुतंप्रिवे होमयेत्सर्पिरंभोज सह
स्राणिचतुर्दश्या ग्रहाणांदेवकोपानां य
न्नाणां राक्षसांतथा उपद्रवाणां सर्वेषां
भयानांनृपतेस्तथा क्रूराणामतिदृष्टीनां
महाप्रांतिंप्रजायते ६ सर्ववारेषुसर्वत्र
जपेन्मंत्रंसदायुतं होमयेत्सर्पिरन्नौटैः
भिश्रंचंदनमिश्रितं पायसंतत्रभिश्रंच
मीनमांससमन्वितं देवतानांमनुष्या

णां रोगार्त्तानां महेश्वरि ॥ ब्रह्मादीनां नृपादी॥
नां महापापं प्रजायते ॥ अथ वक्ष्यामि देवेशि
पूजाक्रममनुत्तमं श्रीदेव्याः षोडशान्तयो पू
जां मानासिकीं चरेत् ॥ सूतके सूतके देवि प
थि कान्तारमण्डले मनसैव चरेत्पूजां त्रि॥
पुरायाः महेश्वरि शृणु त्वं भक्तिभावेन य
थावद्वर्ण्यते मया उत्थाय शयनाद्ब्राह्ले॥
देवि दिव्यमुहूर्तके प्रक्षाल्य मुखहस्तांघ्री

श्री॰
८

आचमेत्त्रिर्महेश्वरि प्राणायामत्रयं कृत्वा गु
रुं ध्यात्वा सम्पातिकम् ॥ ध्यात्वा पूर्वे [illegible] षढी
है न्यासं कृत्वा यथाविधि जपेन्मूलं च गाय
त्रीं गुरवे तत्समर्पयेत् ॥ आगत्य बहिरोंका
रं जपन्नारण्यभूमिषु ॥ तत्र मूत्रादि संत्य
ज्य वल्मीकं शौचमाचरेत् रमाबीजेन सं
प्रोक्ष्य दन्तान्साधकसत्तमः मायाबीजे
न गंडूष त्रयं कुर्यान्महेश्वरि मूलेन देवि

तीर्थानि तथावाह्य स्वसिद्धये गंगेचयमुने
चैव गोदावरि सरस्वति नर्मदेसिंधुकावीरि
जलेस्मिंसन्निधिंकुरु ॥ इत्यावाह्य महादेवी
देवीमावाहयेत्तथा मूलेनत्रिस्समुन्मज्य ॥
नद्यंभसि महेश्वरि ॥ ततो मूलं जपेन्मंत्री
गायत्रींच विशेषतः सूर्यायार्घ्यत्रयंदत्वा
देवदेव्योस्तथैवच जलादारुह्यवाससि ॥
परिधाप्यच साधकः संध्यांतुमनसाकृ

श्री॰
८

त्वा चाद्यमर्घ्यपूर्वकम् । संध्यां निवर्त्य दे
वेशि यागगेहं ततो व्रजेत् । तत्र द्वारार्चनं
कृत्वा । कुर्यादासनशोधनम् । भूतशुद्धिं
ततः कृत्वा प्राणायामविधिं ततः । षोड
शीन्यासभागेन देहं देवमयं चरेत् । मा
तृकावर्णभागोक्तं श्रीचक्रं तत्र भावयेत्
विभाव्य तत्र श्रीचक्रं हृदये साधकोत्तमः
योगपीठं ततोऽभ्यर्च्य हँ तँ यँ रँ लँ वँ शति

विंदौकामेश्वरींकोण विद्यांकामेश्वरीन्य
सेत् पात्राणिस्थापयेतत्र त्रिकोणेजल
निर्मिते चतुरस्रंमण्डलंच विधायचंद
नांबुभिः सामान्यार्घ्यविद्यायाया मण्डलं
पूजयेच्छिवे ॥ चतुरस्रंमण्डलंच समभ्य
र्च्यैवतेनतथा ॥ अस्त्रायफडितिवंच सं
स्थाप्यत्रिपादिकाम् ॥ तत्रास्त्रताति
तंश्चारवं समभ्यर्च्यतथासुधीः तथाकेम

श्री॰
२१

ण्डलं देवि सोमवह्न्यर्कमण्डलं संपूज्य मू
लमंत्रेण कलाश्चैषां समर्चयेत् ॥ मूला
णाभिमन्त्रितं च विधाय तीर्थवारि च ॥
तेनामृतेन देवेशि देवं पूज्य मुद्रां निवेद्य च ॥
तीर्थमावाह्य देवेशि अङ्कुशं तत्र विभावयेत्
सामान्यार्घ्यस्य वामेन कलशं पूर्णाभितः
शिवे त्र्यस्रं षडस्रकं चैव वृत्तं चतुरस्रम
ण्डलं पुष्पादितैस्तमभ्यर्च्य तत्रकूटत्र

ये[illegible]च षडंगन्यासभागेन समभ्यर्च्योष
डशकम् चतुरस्रं तथाभ्यर्च्य संस्थाप्या
त्र त्रिपादिकाम् ॰ कलासूर्येन्दुवह्नीनां
समभ्यर्च्य यथाविधि कलशेषु महादे
वि देवीं संपूजयेत्सुरां आनंदभैरवं चैव
देविकूटत्रयेण च ॰ मायारमाकामबीजैः
धेनुमुद्रां प्रदर्शयेत् मत्स्यमुद्रादिनाच्छा
द्य सामान्यार्घ्यस्य दक्षिणे कलशाहं म

एलंच विधायानंतं महेश्वरि शक्तिपात्रंस
माधाय मूलेनाष्टाभिमंत्रितम् ॥ पंक्त्याका 6/2
रेणदेवेशि पात्राणिस्थापयेत्ततः पाद्या
र्घ्यमधुपर्कैश्च [illegible]मनीयपात्रपूजनम् ॥ वि
धाय तत्र [illegible] श्रीदेव्या न्यासंषडंगपूर्वकम्
मणिपूरे ब्रह्मरंध्रे मूलाधारादिके शिवे ॥
शिवशक्त्योः सामरस्यं विभाव्य साधकेश्वरः
ततः कामकलारूप स्त्रिपुरीकृतविग्रहः

ष्ठावपुष्पतोयाभ्यां कांच तर्पयामि नमः इति ॥
समस्थादेवि संतर्प्य ततः कूटत्रये च सर्वे
स्वताह तपाद्याः पूजनीयास्ततर्पलोः ॥
संतर्पयेद्गुरूंस्तत्र दिव्यौघादीन्महेश्वरि ॥
तत्त्वत्रयेणवाचम्य ॥ र्वं एवं भवेत्स्वयम् ॥
श्रीचक्रे देवदेव्योश्च रूपं ध्यात्वा त्रिवर्णकं
स्थापनं सन्निधानं च सम्मुखीकरणं शिवे
श्री· मुद्रा साधकः कृत्वा देवीं ध्यात्वाचमुद्रया
११
स्पष्ट्वा द्य

देव्यै देवाय मूलेन प्राणं दत्वा महेश्वरि शि
वशक्तयोः परं रूपं ध्यात्वा पूजां समारभेत्
तत्रादौ देवदेव्योश्च पाद्यार्घ्यादीन्निवेदयेत्
मधुपर्कं निवेद्यात्र निवेद्याचमनीयकम्
नानालंकारवस्त्राणि निवेद्य साधकोत्तमः
नैवेद्याचमनीयादि शिवशक्तयोः समर्पयेत्
धूपदीपादि संभाव्य परमान्नं निवेदयेत्
तांबूलं चमकं दत्वा हृत्कमलाग्रे नमस्कुर्यात्

पुष्पांजलिं च श्रीचक्रे दत्वा पूजां समारभे
त् ~ आदौ कामेश्वरीं नित्यां पूजयेद्भगमा
लिनीम् ~ नित्यक्लिन्नां च संपूज्य भीरुं
डां च महेश्वरीम् श्रीवह्निवासिनीं नित्यां
महाविद्येश्वरीं तथा । शिवदूतीं महेशानि
त्वरितां पूजयेत्ततः + ~ त्रिपुरां पूजयाम्या
य तर्पयामि नमः इति ~ तत्रादौ पूजये
श्री: द्देवि ऐं क्लीं सौः त्रिपुरेश्वरी त्रिपुरसुंदरी

२८ + श्रीकुलसुन्दरीं नित्यां नित्यां नित्यां ततः परम् । ततो नीलपताकां च विजयां
महेश्वरि । श्रीसर्वमङ्गलां नित्यां ज्वालामालां ततः परम् । चित्रां नित्यां महेशानि
त्रिकूटां पूजयेच्छिवे । पुनः पुष्पांजलिं दत्वा श्रीचक्राधारमागतोः । गुरुपंक्ति
पूज्या तर्पणीया पृथक् पृथक् । गुरुपूजां विधाया त्रिपुरां पूजयेत्ततः ॥

देवि नत्तस्त्रिपुरवासिनीम् ॥ त्रिपुरांपूज
येन्मंत्री ऐंक्लींत्रिपुरमालिनीम् ह्रींश्री
सौः त्रिपुरासिद्धां पूजयेत्त्रिपुरांबिकाम्
पूजयेन्मांत्रिकोमंत्रैः महात्रिपुरभैरवी
म् ॥ इतिश्रीचतुरस्रादि बैन्दवान्तेषुपू
जयेत् ॥ नवचक्रेषुदेवाप्ति नवचक्रेश्व
रीस्तथा पूजनीयास्त्वयोगिन्यो वामाव
र्तेनपार्वति ॥ अणिमाद्यास्तथासिद्धीः

पूजयेत्साधकोत्तमः ब्राह्म्याद्याः मातरः पू
ज्याः रेखायां परमेश्वरि सर्वसंक्षोभिणीमु
द्रा नवमुद्राः प्रदर्शयेत् ततोमूलेनश्री
विद्यां संतर्प्य परमेश्वरीम् पुष्पांजलिं
च श्रीचक्रे + ... क्लीं श्रीं श्रं
कामाकर्षिणीं च नित्याकलापदेश्चिताम् ... ग्रां
बुद्ध्याकर्षिणीं चैव इम हं अहंकाराकर्षिणीं
रं शब्दाकर्षिणीं चैव उं स्पर्शाकर्षिणीं

+ दत्त्वा ह्यष्टदले चर्चयेत् । सर्वाशापूरकाख्य श्रीचक्राय महेश्वरि । दद्यात्पुष्पाञ्जलिं दिव्यं ततः संपूजयेच्छिवाम् ।

श्री:

तथा ऊं रूपाकर्षिणी नित्यां ऋं रसाक
र्षिणी तथा ~ ॠं गंधाकर्षिणी नित्यां ~
ऌं चित्ताकर्षिणी तथा ॡं धैर्याकर्षिणी
नित्यां एं स्मृत्याकर्षिणी तथा ऐं नामा
कर्षिणी नित्या ओं बीजाकर्षिणी तथा औं
आत्माकर्षिणी नित्यां अं अमृताकर्षिणी त
था अः शरीराकर्षिणी च षोडशारे सुपूजये
त् ~ मूलदेवीमहादेवि संतप्येसाधकोत्तमः

अनङ्ग॰मेखलेति च,
अनङ्ग॰मदनादेवी
अनङ्ग॰मदनातुरा

सर्वसंक्षोभके चक्रे दत्वा पुष्पांजलिं पुनः अ
नंगकुसुमां देवी संपू
ज्यानंगरेखां च संपूज्यानंगमालिनी सं
पूज्याष्टदले देवि मूलदेवीं च तर्पयेत् । त्रि
वश्यान्तिं साधको प्राः प्रणमेद्योनिमुद्रया ।
रत्येतच्चक्रत्रितयं ध्यायेच्चंद्रस्वरूपकम् ।
सर्वसौभाग्यदायात्र श्रीचक्रायमहेश्वरि
दत्वापुष्पांजलिं मंत्री पूजयेत्साधकोत्तमः

संपूज्या
लिनी। अ
पूग संपू

श्री
२४

सर्वसंक्षोभणी शक्तिः सर्वविद्राविणी तथा
२ श्रीसर्वजृंभिणी शक्तिः सर्ववशंकरी तथा
श्रीसर्वरंजिनी शक्तिः सर्वोन्मादनकारि-
णी (१ श्रीसर्वाकर्षिणी शक्तिः + सर्वस्तंभन- +सर्वाह्लादनकारिणी। सर्वसंमोहनी शक्तिः
कारिणी) सर्वार्थसाधनी शक्तिः सर्वसं
पत्प्रपूरिणी सर्वमंत्रमयी शक्तिः सर्वद्वं
द्वक्षयंकरी संपूज्यां साधकैरेता नामाव
लेन पार्वति कामेश्वरीं च संपूज्य प्रणमे

योनिमुद्रया ~ सर्वार्थसाधकायाय च
क्रायसाधकोत्तमः पुष्पांजलिंततोदद्या
त्पूजयेत्सिद्धिदेवताः सर्वसिद्धिप्रदादेवी
सर्वसंपत्प्रदाततः ~ सर्वप्रियंकरीदेवी
सर्वमंगलकारिणी सर्वकामप्रदादेवी ~ + सर्वमृ
सर्वदुःखविमोचिनी + सर्वांगसुंदरीदेवी मनी
सर्वसौभाग्यदायिनी संपाततैस्समभ्य विना
र्च्य तर्पयेन्मूलदेवताम् ~ कामेश्वरीच

श्री·
१५

देवेशि प्रणमेद्योनिमुद्रया ~ सर्वरक्षाक
रयापि चक्राय सर्वं दित्ते ~ दद्यात्पुष्पां
जलिं देवि पूजयेत्साधकोत्तमः ॥ ॐ
ह्रीं श्रीं सर्वरक्षा देवी सर्वप्राप्तिस्ततः परम्
सर्वैश्वर्यप्रदा देवी सर्वज्ञानमयी ततः
ततः संपूजनीया च सर्वव्याधिविना~
शिनी सर्वाधारस्वरूपा च सर्वपापहरा
ततः सर्वानंदमयी देवी सर्वरक्षास्व

रूपिणी महादेवीमहादेवि सर्वेप्सितफ
लप्रदा इतिगंधाद्यैःपूज्यामूलदेवींच
तर्पयेत् ~ संतर्प्यसच्छिवांदेवीं प्रणमे
द्योनिमुद्रया एतद्वितीयचक्रं तु सूर्य
रूपंस्मरेदादि सर्वरोगहरायात्र चक्रा
यनवरूपिणे दत्वापुष्पांजलिंदेवि देवा
वरकंप्रपूजयेत् वश्चिनीवाग्देवतादौ
कामेश्वरीतथाश्चिवे ~ मोदिनीवाग्देव ~

श्री॰
२८

दाश्चयानिच सर्वसिद्धिप्रदायात्र श्रीचक्रा
यमहेश्वरि दत्वाप्रुष्पांजलिंदेवि पूज
येत्साधकोत्तमः कामेश्वरीवज्रेश्वरी पू
जयेभगमालिनीम् ॐ एत्त्रयेणदेवेशि
त्रिकोणंसाधकोत्तमः इतिसंपूज्यसंत
र्प्य मूलेनमूलदेवताम् ॥ सर्वानंदम
यायात्र श्रीचक्रायस्वबिंदवे दद्यात्पु
श्री॰ ष्पांजलिंदेवि साधकः सर्वसिद्धये ॥
२८

मूलविद्यां समुच्चार्य सर्ववारं महेश्वरि पूज
येत्साधको भक्त्या महात्रिपुरसुंदरी मू॰
इति संपूज्य संतर्प्य गंधाक्षतप्रसूनकैः
धूपदीपादिभिश्चैव नैवेद्यैश्च महोत्तरैः
तथा श्रीवटुकायापि दद्याद्बलिमनुत्तम
मू॰ योगिनीभ्यो बलिं दत्वा क्षेत्रपालाय
चैततः विघ्नकृद्भ्यश्च भूतेभ्यो सर्वाबा
लिमनुत्तमम् मू॰ — दत्वादेवेषु नैवेदि॰

नैवेद्याचमनीयकम् ~ तांबूलं छत्रचाम
रा रात्रिकादीन्निवेदयेत् ~ संक्षोभद्रावि
ण्याकृष्टिः वश्योन्माद महांकुशाः खेच
री बीजयोन्याख्या नवमुद्राः प्रदर्शयेच ~
सौभाग्यबीजन्यासेन स्वदेहं व्यापये ~
त्सुधीः देव्यग्रे च जपं कृत्वा पाठं कुर्या
त्ततः परम् ~ यमै सहस्रनाम्नां तु तं
श्री· त्रराजस्य पार्श्वेनि श्रीविद्याज्ञेयो महादेवि
१८

जपंतत्रसमर्पयेत् गुह्यातिगुह्यगोप्त्रीत्वं गृ
हाणास्मत्कृतंजपम् ~ सिद्धिर्भवतुमेदेवि ~
त्वत्प्रसान्महेश्वरि ~ गणेशग्रहनक्षत्र यो ~
गिनीराशिरूपिणीं ध्यात्वान्यासंचरेद्देवि ~
देवदेव्योविसर्जयेत् ~ प्रातःप्रभृतिसायान्तं
सायादिप्रातरंततः यत्करोमिजगन्मातस्त
दस्तुतवपूजनम् ~ संहारमुद्रयादेवि देव
देव्योविसृज्यच स्वयंसदाशिवोभूत्वा शिव

शक्तिस्वरूपकः त्रैलोक्यसाधको देवि गोपनी
यं स्वयोनिवत् ॥ इतीदं पटलं गोप्यं प्रथमां
गं स्वरेश्वरि सारं त्रिपुरसुंदर्या रक्षणीयं स्व
पुत्रवत् ॥ नवाच्यं परशिष्याय कृतघ्नाय म
हेश्वरि वेदनिंदापरायापि नदेयं शिवरूपि
णे श्रद्धां परीक्ष्य दातव्यं स्वशिष्यायैव सुंदरि
षण्मासानैव वर्षान्ते द्वादशाद्वेपि वा शि
वे ॥ दातव्यं गुरुभक्ताय गुरुध्यानरताय च

श्रीः
२८

मालिकायमहादेवि पुद्ध धीनायवैपुनः सा
यकेचसवमिधाय शतन्नायचसाधवे दत्वेमं
परमंगुह्यं देवि कः सिद्धिमाप्नुयात्। परधि
धायदेवेषि शतन्नायचदंभिने दत्वेदंपर
मंतत्वं देवि कःप्रपतेदयः योगुरोर्वचनां
कृत्वा गृह्णातिहेतडुत्तमम्। सोरण्येनि
र्जनेचैव जायतेब्रूरराक्षसः यःकश्चिद्दन
लोभेन प्रकाशयतिडुर्मतिः इहैवपतितत्तो

याति नरकानेकविंशतिम् तस्मात्परीक्ष्यदेवे
शि रहस्यं ह्येतदुत्तमम् ~ देयं हि तत्र शिष्या
य वत्सांते च विशेषतः ~ ॥ इति श्रीरुद्र
यामले तंत्रे श्रीविद्यापटलम् ~ ॥

श्री.
२०

ॐ श्रीमहात्रिपुरसुंदर्यै नमः ॥ अथ नादेविव
क्ष्यामि त्रिपुरार्चनपद्धतिं गद्यपद्यमयीं गो
प्यां सकलागमनिश्चितां प्रातःस्नात्वमनु
त्वा तु यो देवीं भक्तितोर्चयेत् तस्य पूजा तु वि
फला पूजा च हीना यथा क्रिया ~ ॐ तत्र श्री
मान् साधको ब्राह्मे मुहूर्ते प्रायनतलादुत्था
य करचरणौ प्रक्षाल्याचम्य प्राणायामत्र
यं कृत्वा निजासने समुपविश्य निजाधार

त्रिकुटिनवर्णो-ष्टदलकमलकर्णिकान्तर्गता
धोमुख सहस्त्रदलकमलकर्णिकान्तर्गत-
चंद्रमण्डल सिंहासनोपरि स्वगुरुं शुक्लव
र्णं मुक्तालंकारभूषितं ज्ञानानंदमुदितमान
सं सच्चिदानंदविग्रहं त्रिनेत्रं चतुर्भुजं ज्ञान
मुद्रा पुस्तकवराभयकरं वामांगे वामहस्त
धृत कमलया रक्तवसना भरणया स्वशु
श्री॰ क्त्या दक्षहस्तेनालिंगितं सर्वदेवदेवं परम
८१

शिवस्वरूपं शान्तं सुप्रसन्नं ध्यात्वा ~ तच्चरण
युगल विगलदमृत धारया स्वात्मानं प्लुतं ~
विभाव्य ~ मानसोपचारैराराध्य ~ ॐ ऐं ह्रीं
श्रीं लं पृथिव्यात्मकं गंधं समर्पयामि नमः
ऐं हं आकाशात्मकं पुष्पं समर्पयामि नमः
ऐं यं वाय्वात्मकं धूपं समर्प॰ ऐं रं वह्न्यात्म
कं दीपं स॰ ऐं वं अमृतात्मकं नानानैवेद्यं स॰
ऐं सं सर्वात्मकानि फलमूलतांबूलानि स॰

ॐ सहस्रदलपंकजे सकलशीतरश्मिप्र
भं वराभयकरांबुजे विमलगंधपुष्पांब
रं प्रसन्नवदनेक्षणं सकलदेवतारूपि
णं स्मरेच्छिरसिहंसगं तदभिधानपूर्वं
गुरुम् ॥ ॐ ऐं ह्रीं श्रीं ह्स्ख्फ्रें ह्सक्ष्म्ल्व्र्यूं ह्सौः स्हख्फ्रें स्हक्ष्म्ल्व्र्यीं स्हौः
श्रीमच्छ्री अमुकानंद नाथश्री
पादुकां पूजयामि नमः ॥
श्री नवप्रणाममंत्रा यथा ॥ नमामि सद्गुरुं शांतं
४४

तं प्रत्यक्षंशिवरूपिणं शिरसायोगपीठस्थं ॥
मुक्तिकामार्थसिद्धये १ श्रीगुरुंपरमानन्दं ॥
वन्दाम्यानन्दविग्रहं यस्यसन्निधिमात्रेण :
चिदानंदायतेपरम् २ अखण्डमण्डलाका
रंव्याप्तंयेनचराचरं तत्पदंदर्शितंयेन त
स्मैश्रीगुरवेनमः ३ अज्ञानतिमिरांधस्य ज्ञा
नांजनशलाकया चक्षुरुन्मीलितंयेन तस्मै
श्री॰ ४ गुरुर्ब्रह्मागुरुर्विष्णु गुरुःसाक्षान्महे

श्वरः गुरुरेवजगत्सर्वं तस्मैश्री० ५ नमस्ते०
नाथभगवन्शिवायगुरुरूपिणे विद्यावतार
संसिद्धै स्वीकृतानेकविग्रहे ० ६ नवायन
वद्रूपाय परमार्थैकरूपिणे सर्वत्ताननतमो
भेद भानवेचिद्धनायते ० स्वतंत्रायदयाक्लृ
प्त विग्रहायपरात्मने परतंत्रायभक्तानां०
भव्यानांभव्यरूपिणे ८ पुरस्तात्पार्श्वयोःपृ
ष्ठे नमस्कुर्यामुपर्यधः सदासच्चित्तरूपेण

श्री०
१३

विधेहिभवदासनम् ६ इतिश्रीगुरुवरं प्रण
म्य सुप्रसन्नं विभाव्य मनसा तदाज्ञां गृही
त्वा मूलाधारे सुवर्णवर्णे चतुर्दलकमल
कर्णिकान्तर्गत शृंगाटकान्तर्गत त्रिकोण
पीठोपरि परांशक्तिंकुण्डलिनीं सुप्तसर्पा
कारां ऊर्ध्वमुखीं सार्धत्रिवलया मध्यद्दिन
करसहस्रभास्वरां विद्युत्कोटिसन्निभां ~
बिसतंतुतनीयसीं पंचाशद्वर्णविग्रहा -

महात्रिपुरा कला रूपिणीं त्रियामानं सर्वप्रा
णिजीवां सर्वदेवाधिदेवीं सकलमंत्रमातरं
सुप्तां विभाव्य ~ गुरूपदिष्टनिजसहजनादे
न सचैतन्यां विधाय ~ तत्रचतुर्दलेषु ~ ॥
वं नमः षं नमः शं नमः सं नमः हंसः इति
मंत्रेण कमलात्कमलं नीत्वा ~ ततः स्वाधि
ष्ठाने लिंगमूले विद्रुमवर्णे षड्दलितां प्रा
पय्य ~ तत्र ~ बं नमः भं नमः मं नमः ~

इति पत्रेषु प्रादक्षिण्येन मध्ये मूलेन च संपूज्य

श्री·
२५

यंनमः रंनमः लंनमः इतिपत्रेषुमध्येस्
लेनच प्रपूज्य ततोमणिपूरकेनाभौ
नीलवर्णे दशादलकमले तांनीत्वा तत्र
डंनमः ढंनमः णंनमः तंनमः थंनमः
दंनमः धंनमः नंनमः पंनमः फंनमः
इतिपत्रेषुमध्ये मूलेनच संपूज्य ततो
वक्षस्यनाहते पिंगलवर्णे द्वादशकम
लेतांनीत्वा तत्र कंनमः खंनमः गंनमः

घंनमः ङंनमः चंनमः छंनमः जंनमः झं
नमः ञंनमः टंनमः ठंनमः इतिपत्रेषुम
ध्ये मूलेनच संपूज्य ॥ ततोविशुद्धौकण्ठे ॥
धूम्रवर्णे षोडशदलकमले तांनीत्वा ॥ तत्र
अंनमः आंनमः इंनमः ईंनमः उंनमः
ऊंनमः ऋंनमः ॠंनमः ऌंनमः ॡंनमः
एंनमः ऐंनमः ओंनमः औंनमः अंनमः
अः नमः ॥ इतिपत्रेषुमध्ये मूलेनचसंपू

ज्य॰ ततोभ्रूमध्ये आज्ञाचक्रे विद्युद्वर्णे द्वि
दलकमले तांनीत्वा तत्र हंनमः क्षंनमः
इतिसंपूज्य॰ ततोब्रह्मरंध्रांतर्गत सहस्र
दलकमलान्तं प्रापय्य तत्र बिंदुरूप तेजो य्य
मय परमशिवेन सहैकतांनीत्वा॰ ततः
स्रवतापरमामृतेन तां संतर्प्य तत्रनाद॰
श्रवणतत्परो मुहूर्तंलयंविभाव्य ततो
वरोहे सर्वत्र सोहमिति कमलात्कमले॰

अवरोहणमार्गेणाज्ञाचक्रादिक्रमेण तेषु ते
षु कमलेषु तैस्तैरचारैः संपूज्यमानां तत्तदा
धार तत्तत्स्थानतत्तद्वर्णे तत्तदधिदेवताः सं
तर्पयन्ती मूलाधारं प्रापय्य ॰ तत्रैव स्वस्था
ने मूलाधारे संस्थापये दित्यारोहावरोह
क्रमेण परांशक्तिं कुण्डलिनीं ध्यात्वा ॰ ॥
मूलाधारे वह्निमण्डलं दशकलात्मकं ॰
श्री॰ विभाव्य ॰ तत्र मूलविद्यायाः प्रथमकूटं

वाग्भवाख्यं स्फुरत्तडिल्लताभासुरमनाहत
पर्यन्तं प्राप्तशिखं विभाव्य अनाहतेसूर्य
मण्डलं द्वादशकलात्मकं ध्यात्वा तन्मध्ये
मूलविद्यायाः कामराजाख्यं द्वितीयकूट
मुद्यदादित्यसंकाशं मात्रापर्यन्तं प्राप्तना
दशिखं प्रथमकूटं प्रस्तुतरश्मिकं ध्यात्वा
मात्रायां सोममण्डलं षोडशकलात्म
कं विभाव्य तन्मध्ये मूलविद्यायाः शक्तिकू

दाख्यं तृतीयखण्डं शशिप्रभं ब्रह्मरंध्रान्त
गत बिंदूर्ध्व मण्डलपर्यन्तं प्राप्तनादरूपं
ध्यात्वा ~ ततो मूलादि ब्रह्मरंध्रान्तं मूल
विद्यां उद्यद्दिनकरसहस्रभास्वरां तेजोम
यीमखण्डां ध्यात्वा ~ तत्तेजसा व्याप्तं स्वदेहं
विचिन्त्य तत्तेजसा परिणतां श्रीपरदेव
तां हृदयकमले ध्यात्वा मानसोपचारै
श्री· संपूज्य ~ मूलविद्यया प्राणायामत्रयं ~
२८

मूलविद्यया वक्ष्यमाणा ऋष्यादिकरषडंग-
न्यासांश्च कृत्वा ॥ पूरकः १६ कुंभकः ६४ रे
चकः ३२ सकलह्रीमिति मंत्रेण यथाशक्ति
जपं समर्प्य ॥ अस्य श्रीश्रीविद्यामंत्रराजस्य
दक्षिणामूर्तिऋषिः पंक्तिश्छंदः श्रीविद्या
देवता कामराजं बीजं ककारादिकूटं शक्तिः
सकारादिकूटं कीलकम् ममचतुर्विधपु
रुषार्थे जपे विनियोगः ॥ अथ ऋष्यादि

न्यासः दक्षिणामूर्त्तिऋषयेनमः शिरसि-
पंक्तिछंदसेनमो मुखे श्रीविद्यादेवतायेन
मः हृदये ऐं बीजायनमो गुह्ये सौः शक्तयेनमः पाद
योः क्लीं कीलकायनमः नाभौः चतुर्विधपुरुषार्थे सर्वां
गेषु- अथषडंगन्यासः ॥ ऐं अंगुष्ठाभ्यां
नमः हृदयायनमः। क्लीं तर्जनीभ्यांनमः
शिरसेस्वाहा। सौःमध्यमाभ्यांनमः शिखा
श्री॰ येवौषट्। ऐं अनामिकाभ्यांनमः कवचा॰
२८

क्लीं कनिष्ठिकाभ्यां नमः नेत्रत्रयाय वौषट्
सौः करतलकरपृष्ठाभ्यां नमः अस्त्राय फ
ट् ॥ अथ ध्यानम् ॥ चंद्रार्कानलको
टिनीरदरुचिं पाशांकुशौ वाणगान्दधतं
खड्गमभीति शूलवरदां हस्तांबुजैरष्टभिः
कामेशान शिवोपरिस्थितिपदां ख्यतीं
वहंतीपरां श्रीचिन्तामणि मंत्रराजवपु
षीं ध्यायेन्महाषोडशीम् ॥ ततोयथा

पं॰ न्यासं ध्यानिजपंकुर्यात्समध्ये॥ ततोयथाध्यानि
ध्यादौऋष्यादिकंन्यासं करशुद्धिस्ततः वि
नाभवेन्मूकः सश्रांस्यादासनंविनाऋषि
दैवतछंदोभिः परित्यक्तोभुजौविना इतिव
चनात् ॐ प्रातर्नमामिजगतोजनन्या
श्चरणांबुजं श्रीमत्त्रिपुरसुंदर्या नमामि
चरणांबुजं हरोहरिर्विधिरिविश्व सृष्ट्यादिकं
करुतेयथा प्रातःत्रिपुरसुंदर्या नमामि
नमितायाहरादिभिः प्रातस्त्रिपुरसुंदर्याः
श्री॰
२९

पादपंकजम् ॥ यत्पादाम्बु शिरसि भाति
गंगा महेशितुः प्रातः पाशांकुशशरांश्चा
पहस्तां नमाम्यहम् ॥ उद्यदादित्यसंका
शां श्रीमत्त्रिपुरसुंदरीम् प्रातर्नमामि पा
दाब्जं यथेदं भासते जगत् ॥ तस्यास्त्रिपु
रसुंदर्या यत्प्रसादान्निवर्तते ॥ य श्लो
कपंचकमिदं प्रातर्नित्यं पठेन्नरः तस्मै
दद्यादात्मपदं श्रीमत्त्रिपुरसुंदरी ॥ ॥

इतिस्तुत्वाप्रणम्य निजकृत्यंसमर्पयेत्
प्रातःप्रभृतिसायांतं सायादिप्रातरंततः
यत्करोमि जगद्योने तदस्तुतवपूजनम्
इतिसमर्प्य॥ स्वकर्मानुष्ठानाय॥ त्रै·
लोक्यचैतन्यमयेसुरेश्वरि श्रीसुंदरित्व
च्चरणाज्ञयैव प्रातःसमुत्थाय तवप्रिया
र्थं संसारयात्रामनुवर्तयिष्ये संसार
श्री· यात्रामनुवर्तमानं त्वदाज्ञया श्रीत्रिपु
२०

देवदेवेश त्वत्पादोत्तिरस्कारकलिप्रमाद भया
नि मां माभिभवन्तु मातः। जानामि धर्मं न च
मे प्रवृत्तिः जानाम्यधर्मं न च मे निवृत्तिः त्व
या हृषीकेश हृदिस्थयाहं यथा नियुक्तो
ऽस्मि तथा करोमि ॥ इति देव्यास्तां प्रार्थ्य
गुरूपदेशज्ञान सहजसिद्धमजपाजपं
तत्तद्देवताभ्यः संकल्प्य समर्पयेत् ॥
अथ पूर्वेद्युरहोरात्राचरितमुच्छ्वासनिःश्वा

स्मात्मकं षट्शतनाधिक मेकविंशति सहस्र
संख्याक मजपाजपं मूलाधार स्वाधिष्ठान
मणिपूर अनाहत विशुद्धाज्ञाचक्र ब्रह्मरंध्रे
षु चतुर्दल षड्दल दशदल द्वादशदल-
षोडशदल द्विदल सहस्रदलेषु-स्वर्णो-
विद्रुम नील पिंगल धूम्र विद्युत्कर्बुरव
र्णेषु-स्थिताभ्यो गणपति ब्रह्म विष्णु
श्री० रुद्र जीवात्म परमात्म गुरुपादुकाभ्यो
२१

यथाभागशः समर्पयामिनमः इतिकृ
तांजलिः संकल्प्य समर्पयेत् ॐ ऐं
ह्रीं श्रीं मूलाधारचक्रस्थाय गणपतये
अजपाजपानां षट्सहस्राणि समर्पया
मिनमः वं स्वाधिष्ठानचक्रस्थाय ब्रह्म
णे अजपाजपानां षट्सहस्राणि समर्प
यामिनमः वं मणिपूरकचक्रस्थाय वि
ष्णवे अजपाजपानां षट्सहस्राणि स.

ॐ विशुद्धिचक्रस्था
यजीवात्मनेऽजपाज
पानां सहस्रं सम
र्पयामि नमः ^

रुद्राय

मर्पयामिनमः ॐ अनाहतचक्रस्थाय जी
वात्मने अजपाजपानां षट्सहस्राणि स
मर्पयामिनमः ^ ॐ आज्ञाचक्रस्थाय पर
मात्मने अजपाजपानां [illegible] सहस्रं [illegible] स
मर्पयामिनमः ॥ ॐ सहस्रदलकमल
कर्णिकामध्यवर्तिन्यै श्रीगुरुपादुकायै
[illegible] अजपाजपानां [illegible] सहस्रं समर्पया
मिनमः इति समर्पयेत् ॥ एतावत्क

श्री:
२२

त्रैमशान्ताः चेत्॥ ॐ [illegible] अद्यपूर्वेद्युरहोरा
त्रावरितमुच्छ्वासनिःश्वासात्मकं षट्शता
धिकमेकविंशतिसहस्रसंख्यात्मकं अज
पाजपं ब्रह्मरंध्रस्थ सहस्रदलकमलक
र्णिकामध्यवर्तिन्यै श्रीगुरुपादुकायै स
मर्पयामि नमः॥ इति गुरवे एवं समर्प
येत्॥ ॥ इत्यजपाजपं समर्पयेत्॥ ॥
अद्य सूर्योदयमारभ्य अहोरात्रेण उच्छ्वा

सनिःश्वासात्मकं षट्शताधिकमेकविंश
ति सहस्र संख्यात्मकमजपाजपमहं करिष्ये ॥
इति कृतांजलिः संकल्प्य समर्पयेत् ॥ अ
जपामंत्रेण प्राणायामं विधाय । अस्य श्री
अजपागायत्रीमंत्रस्य । हंस ऋषिः अव्य
क्तगायत्रीछंदः परमहंसो देवता हं बीजं
सः शक्तिः सोहं कीलकम् । ॐकारस्त
त्वं उदात्तः स्वरः नभःस्थानम् हैमो वर्णः

श्रीः
२२

ममभोक्षार्थे जपेविनियोगः ॥ इतिकृतां
जलिः स्पृत्वान्यसेत् ॥ ॐ हंसात्मनेऋष
येनमः शिरसि ॐ अव्यक्तगायत्रीछंदसे
नमः मुखे ॐ हंसायदेवतायेनमः हृदि॥
ॐ हं बीजायनमः मूलाधारे ॐ सः शक्त
येनमः पादयोः ॐ सोहंकीलकायनमः
नाभौ ॐ ॐकारतत्वायनमः हृदये ॐउ
दात्तायस्वरायनमः कण्ठे नभसेस्थाः

नायनमः मूर्ध्नि घें ह्रैं मायवर्णायनमः स
र्वांगेषु इति विन्यस्य मम मोक्षार्थे जपे
विनियोगः इति कृतांजलिः वदेत् ततः
घं ह्रौं सूर्यात्मने स्वाहा अंगुष्ठाभ्यां नमः हृद
घं ह्रीं सोमात्मने स्वाहा तर्जनीभ्यां नमः शिरसे
ह्रूं निरंजनात्मने स्वाहा मध्यमाभ्यां व शिखा
षट् घं ह्रैं निराभासात्मने स्वाहा अना
श्री· मिकाभ्यां हुं घं ह्रौं अनंततनु सूक्ष्मादेवी
२४ कवचाय

प्रचोदयात्स्वाहा नेत्रत्रयाय वौषट् कनिष्ठ
काभ्यां नमः वौषट् मे हृत्ः प्रव्यक्तबोधात्मने
स्वाहा अस्त्राय फट् करतलकरपृष्ठाभ्यां नमः
फट् ॥ इति करयोर्विन्यस्य हृदादिषडं
गेष्वपि एतानेव मंत्रान्विन्यस्य ध्यानं कु
र्यात् ॥ द्यां मूर्धानं यस्य विप्रा वदंति खं
वै नाभिं चंद्रसूर्यौ च नेत्रे दिशः श्रोत्रे य-
स्य पादौ क्षितिं च ध्यातव्योसौ सर्वभूता

न्नरात्मा ~ इतिविराट्स्वरूपंस्वात्मानंध्या
त्वा ~ तदनुसंधायी प्राणवायुर्निर्गमप्रवे
शात्मके अजपामंत्रे पंचविंशतिवारंज
प्त्वा समर्प्य गुरूपदिष्टमार्गेण नादानुसं
धानपूर्वकं निरस्तसमस्तोपाधिना केना
पिचिद्विलासेन प्रवर्तमानोस्मीति वि
भाव्य स्वकार्यानुष्ठानाय ~ समुद्रमे-
खलेदेवि पर्वतस्तनमण्डले विष्णुप

त्विनमस्तुभ्यं पादस्पर्शंक्षमस्वमे ॥ इति
भूमिंप्रार्थ्य श्वासानुसारेण तस्यांपादं ॥
निधाय ॥ पदेपदे समुद्धरन् गृहाद्बहिर्नि
र्गत्य ग्रामाद्बहिः नैर्ऋत्यां याम्यां वा दि
शि वा शरक्षेपमात्रां भूमिमतीत्य उत्त
राभिमुखं गत्वा एकांते जनवर्जिते ॥
त्तुचते
वस्त्रपात्रे परित्यज्य ॥ कें ऽविष्णु[illegible]
[illegible]षणा येषणास्थानमालकः मलमू

त्रं परित्यज्य ममद्वोषोनदीयते ~ इतिप्रा
र्थ्य ~ मलस्योत्तारणं मंत्रं यथाप्राप्तिजये
द्बुधः ~ सौः ठं ठं ठं स्वाहा ~ इतिमलसूत्रमु
त्तारयेत् ~ मलमूत्रोत्सर्गो वमन दन्तधा
वनादिकं विधाय ~ अनिषिद्ध दिनेषु विहि
तकाष्ठेन ~ क्लींकामदेवाय सर्वजनप्रिया
यनमः ~ इतिदन्तान्विशोध्य जिह्वामूल
श्री· मुल्लिख्य दन्तकाष्ठं प्रक्षालितं पुरः ~
२८

शुद्धदेशोत्पन्नां मृदं मूलेन प्रक्षाल्याचम्य
शुचिस्थानान्मृदं अस्त्राय फडित्यादाय ~
कुशादिक[illegible]मादाय ~ नदीतीरं गत्वा ती
र्थोद्वहिः कटिशौचं विधाय ~ ॥ इति प्रा
तः कृत्यविधिः ~ ॥ अथ स्नानविधिः ॥ ~
तत्रादौ ~ अस्त्राय फडिति जलतीरं प्रक्षा
ल्य ~ तत्र तां मृदं संस्थाप्य ~ अस्त्राय फडि
ति मंत्रेण [illegible] मूलके शापरे काशादि चो[illegible]

त्य प्रक्षेण तस्या मृदो भागत्रयं कृत्वा मूले
न संप्रोक्ष्य रक्षाभिमंत्रित वारिणा ती
र्थं प्रक्षाल्य तत्र हस्तपादादिकं प्रक्षाल्य ॥
ह्रीमिति गण्डूषाणि कृत्वा मूलेन चलुले
त्मी विद्याभिर्वो मुखं प्रक्षाल्य मूलगायत्री
मंत्रेण गायत्रीं प्रक्षाल्य ॥ ओं ह्रीं मणिधर
वज्रिणि महाप्रतिसरे रक्ष २ हुं फट् स्वा
श्री· हा ॥ इति शिखामंत्रेण शिखां निबद्धा ॥
२८

उपस्पृश्य त्रिराचम्य ~ मूलं आत्मतत्त्वाय
स्वाहा मूलं विद्यातत्त्वाय स्वाहा मूलं शिव
तत्त्वाय स्वाहा ~ अथवा ह्रीं स्वाहा इत्याचम्य
वासांस्याकृष्य ~ जलेश्रीचक्रं विभाव्य द
त्तभागस्थां मृदं विभज्य ~ त्रीन्भागान्विधा
य मूलेन सूत्रं संशोधयेत् ~ ऐं तीर्थि
न्यैनमः क्लीं देवीरूपायैनमः सौः स्वरूपा
यैनमः इति मृदं संशोध्य ~ एकां मृदं

हीत्वा॥ गंगेच यमुनेचैव गोदावरि सरस्व
ति नर्मदे सिंधुकावेरि जलेस्मिन् सन्निधिं
कुरु॥ इति तीर्थमावाह्य मृदं जले निक्षिप्य
तीर्थशक्ति ऐं ह्रिं स्वाहा॥ इति तीर्थशक्ति
क्तिमावाह्य तस्मिंत्तीर्थे मत्स्थले तां ध्याये
त्॥ यथा॥ सर्वानंदमयीमशेषदुरित॥
ध्वंसां शशांकप्रभां शुक्तां बोधकरद्वयेन॥
दधतीं पाशांकुशांतिरवबेमानु॥ दोर्भ्यां वा

श्री॰
२८

श्वेतमूर्त्तिं हेमकलशं मुक्तादाममालांबरं गं
गासिंधुसरित्द्वयादिसहितां श्रीतीर्थेशा
तिं भजे ॥ इति ध्यात्वा ॥ ॐ नमो भगवति
बंबे बंबमालिके बंभिके महामालिनि ए
हि २ भगवति बंधोधवतीघोलवाले ह्रीं श्रीं
शिवजटाधि रूढे गंगे गंगालिके स्वाहा ॥
इति मंत्रेण सप्तधाभिमंत्र्य ह्रीं इत्या
लोक्य कमिति येनं मुद्रया स्नात्वा ॥

मूलविद्यायाः प्रथमकूटमुच्चार्य्ये आत्मत-
त्त्वायनमः - द्वितीयकूटमुच्चार्य्ये विद्यातत्त्वा
यनमः तृतीयकूटमुच्चार्य्ये शिवतत्त्वायन
मः इतितत्त्वत्रयंजले विन्यस्य तत्रश्रीच
क्रं विभाव्य - हृदयकमलाद्देवीमावाह्य -
षडंगेन सकलीकृत्य - तांसावरणांस्थाप
यित्वा - मूलविद्यया योनिमुद्रया तज्जल
श्री· २९ महयाभिमंत्र्य - तस्मिंश्च देवतास्मरण

पूर्वकं श्रवणादि सप्तरंध्राणि निरुध्य ~ त्रि
र्निमज्ज्योन्मज्ज्य कुंभमुद्रया मूलविद्यया
स्वशिरसि त्रिरभिषिच्य मूलेन देवीं त्रिःसं
तर्प्य देवीं स्वहृदि समानीय ~ ॐ ह्रां ह्रीं हं
सः श्रीसूर्याय एतत्तेऽर्घ्यं नमः इति त्रिंसू
र्यायार्घ्यं दत्वा ~ पूर्ववदाचम्य ~ तीरमाग
त्य ~ धौतवाससी परिधाय ~ मृत्तिकादि
ना ऊर्ध्वपुंड्रं तिलकं विधाय वैदिकीं सं ~

ध्यानं विधाय ~ तांत्रिकीमारभेत ~ इति स्ना
नविधिः ~ अथ संध्याविधिः ~ तत्र पूर्व
वदाचम्य ~ मूलेन प्राणायामत्रयं कृत्वा ~
ऋष्यादिकरषडंगन्यासान्विधाय पूर्वव
तीर्थमावाह्य ~ स्वपुरतो धेनुमुद्रया त
थैवरक्षितं तीर्थे जलमवतीकृत्य मूले
नाष्टधाभिमंत्र्य ~ तेन जलेन कुंभौः अंन
मः आंनमः इत्यादिभिः तकारांते मोक्ष

श्री०
५०

कात्तरैः प्रत्यक्तरं स्वशिरः प्रोक्ष्य ~ मूलविद्यया
व त्रिः प्रोक्ष्य ~ सूर्ये मण्डले देवी यथोक्त रूपां ध्या
त्वा ~ दक्षिणहस्तेन जलमादाय ~ लं वं रं यं हं
इति पंचभौतिकमंत्रै सप्तवारमभिमंत्र्य ~ त
ज्जलबिंदुभि र्वामांगुष्ठानामिकाभ्यां मूलेन
स्वशिरसि त्रिः प्रोक्ष्य ~ अवशिष्टजलं वामहस्ते
निधाय ~ तेजोरूपं ध्यात्वा ~ इडयादेहांतः
पापं प्रक्षाल्य कृष्णवर्णं तज्जलं पापरूपं पिं

गलयाविरेच्च ~ पुनर्दक्षहस्तेकत्वा ~ स्ववाम
भागे पुरा:कल्पित वज्रशिलायां फडितिनि
क्षिपेत् ~ हस्तौप्रक्षाल्य ~ मूलेन जलमादाय
प्रवहन्नाड्या ~ सहस्रदल परमामृतेनैकी
भूतं विभाव्य ~ निर्गमय्य ~ तेनजलेन ~
अमृतमालिनिस्वाहा ~ इतिमंत्रेण कृष्णेः
शिरसित्रिः प्रोक्ष्य ~ घं प्रथमकूटं आत्मतत्
त्वं शोधयामिस्वाहा ~ घं द्वितीयं विद्यात्त

श्री॰
८१

त्त्वं शोधयामि स्वाहा ~ ॐ तृतीयं शिवतत्त्वं शोध
यामि स्वाहा ~ इति त्रिराचम्य ~ एतद्वैपरीत्ये
न च त्रिराचम्य ~ ॐ मूलं सर्वतत्त्वं शोधयामि
स्वाहा ~ इति त्रिराचम्य ~ इति नवधाचम्य ~
जलमंजलिना दायोत्थाय ~ ॐ ऐं प्रथम~
कूटं त्रिपुरदेवि विद्महे ~ क्लीं द्वितीयं कामे
श्वरि धीमहि सौः तृतीयं तन्नः क्लिन्ना प्रचो
दयात् ~ १ श्रीमहात्रिपुरसुंदरी पादुकायै

एषोऽर्घः स्वाहा ~ इतिसूर्योभिमुखं अंजलित्र
यं दत्वा ~ मूलेनदेवीं त्रिः संतर्प्य क्रांक्रींसः श्री
सूर्यं तर्पयामिनमः ~ इति त्रिः संतर्प्य ~ मू
लाधारे प्रथमकूटं तडित्कोटिसमप्रभं मूला
दि ब्रह्मरंध्रांतं संचिंत्य ~ तत्तेजः सुषुम्णा
वर्त्मना ब्रह्मरंध्रं नीत्वा ~ वहच्चासाधना ~
धाकाशस्थ वह्निमण्डले समावाह्य तत्तेज
श्री: सोद्भूतां वागीश्वरीं ध्यायेत् ~ पीतां पीतांबरां ~
८८

पीन स्तन्विभूषानुलेपनाम् ॥ तडित्कोटिसह
स्राभां बालामत्तस्त्रगुञ्जुलाम् ॥ पुलकाह्यक
रांभोजां वह्निपीठनिषेडषीम् ॥ वाग्भवोवाग्भ
वोभूतां त्र्यक्षरीसक्षितांस्मरेत् ॥ ऐंप्रथम
कूटंत्रिपुरेदेविविद्महे क्लींद्वितीयकूटंकामे
श्वरि धीमहि सौः तृतीयकूटंतन्नःक्लिन्नाप्र
चोदयात् ॥ इतियथाशक्तिजप्त्वा ॥ श्रीमहा
त्रिपुरसुंदरीपादुकायै एषोर्घः स्वाहा ॥ ॥

इति त्रिरर्घ्यं दत्वा मूलविद्यया देवीं त्रिः संतर्प्य
ॐ ह्रां ह्रीं सः श्रीसूर्याय ॡ घृतेवेः स्वाहा ~ इति
त्रिः सूर्यार्घ्यं दत्वा सूर्यमण्डलाद्वह्निमण्डलात्सू
ल देवीं स्वहृदि समानीय ~ स्वगुरुं प्रणमेत् ~
इति प्रातः संध्याविधिः ~ ततस्तर्पणम् ॥ ~
तत्रादौ वैदिकं तर्पणं समाप्य ~ तांत्रिकमार
भेत ~ ततः प्राणायामादि पूर्वकं स्वपुरतो

श्री· जले पूर्ववत्तीर्थमावाह्य ~ वभिति धेनुमुद्र
४३

या, मृतीकृत्य मूलेनाष्टवारमभिमंत्र्य तत्र श्री
चक्रं विभाव्य देवीमावाह्य ~ मनसा सर्वोपचा
रैः संपूज्य ~ मूलं श्रीमहात्रिपुरसुंदरी श्रीपा
दुकां तर्पयामि नमः इत्यष्टोत्तरशतं संतर्प्य ~
यथाशक्त्या, वरणदेवताश्च संतर्प्य मूलदेवी
मेव सायुधां सवाहनां सपरिवारां सानुचरां
श्रीमहात्रिपुरसुंदरी श्रीपादुकां तर्पयामि न
मः ~ इति संतर्प्य ~ ईशाने गुरोः ~ श्रीमच्छि

द्रूपानंदनाथस्वामिश्रीपादुकांतर्पयामिन
मः ~ वह्नौ परमगुरुश्रीपा॰ नैर्ऋत्ये ~ परमा
चार्यगुरुश्रीपा॰ वायव्ये ~ परमेष्ठिगुरुश्रीपा॰
मध्ये ~ परापरगुरुश्रीपा॰ आदिसिद्धानां
गुरूणां श्रीपादुकांतर्पयामिनमः ~ एकै
कांजलिना परिवारान्संतर्पयेत् ~ ततोमू
लेनदेव्यै अर्घ्यं दत्वा ~ ॐह्रींसः मार्त
ण्डभैरवाय प्रकाशशक्तिसहिताय इदम

श्री॰
४४

ह्रीं स्वाहा ॰ इति श्रीसूर्यायार्घ्यं दत्वा मूल
गायत्रीं च यथाशक्ति जप्त्वा ॰ तीर्थं स्वस्था
ने विसृज्य ॰ वस्त्राणि परिधाय पूर्णं जल
कुंभं गृहीत्वा ॰ उत्थाय मौनी मूलं स्मरन् ॰
यागगेहमागच्छेत् ॰ इति तर्पणविधिः
ततो यागगेहमागत्य ॰ द्वाराग्रे हस्तौ पादौ
च प्रक्षाल्य ताम्रादिपात्रस्थं जलमष्टवा
रमभिमंत्र्य धेनुमुद्रयामृतीकृत्य तेनो

दक्षेन द्वारदेवता: प्रोक्षयेत्पूजयेच्च ॥ दक्षे ॥
गं गणपतये नमः ॥ वामे ॥ वां वटुकाय नमः
पुनर्दक्षे ॥ क्षां क्षेत्रपालाय नमः वामे यां
योगिनीभ्यो नमः ॥ दक्षे गं गंगायै नमः
वामे यं यमुनायै नमः ॥ दक्षे शं शंखनि
धये नमः वामे पं पद्मनिधये नमः ऊर्ध्वे
वं वसुधाराभ्यो नमः वां वास्तुपीपुरुषाय न
मः अधः दं देहल्यै नमः द्वाराग्रे ॥ वं व

श्री·
५५

रुणाय नमः मध्ये विघ्नेभ्यो नमः इतिसं
पूज्य ॥ अपक्रामंतु भूतानि पिशाचाश्च
नगृहका: ये चात्र निवसंत्यन्ये देवता भु
वि संस्थिता: ॥ अपसर्पंतु ॥ इति सिद्धा
र्थोक्षतकुसुमानि मण्डपांत: प्रक्षिप्य ॥
विघ्नानां मार्गं वामांगसंकोचेन दत्वा ॥
पांष्णि ताडेति ॥ वामपाद पुरस्सरं पूजाम
ण्डपांत: प्रविशेत्तु ॥ तत्र पूजामण्डपं॥

धूपदीपमालादिभिः संपूज्य संभूय ॥
नैरृत्ये पं वास्तुपुरुषायनमः पं वास्तुधी
श्वराय ब्रह्मणेनमः ईशाने पं कालना
थायनमः इति संपूज्य पं रक्तवर्णोद्वा
दशशक्तिसहिताय श्रीदीपनाथायन
मः इति दीपनाथं संपूज्य मध्ये भैं भै
रवायनमः इति मध्ये भैरवं संपूज्य
श्री· ततोऽर्घ्यमादाय फट् इति पूजावेदीं
९८

गत्वा तत्रासनमास्तीर्य ॥ अस्यश्रीआसन
शुद्धिमंत्रस्य मेरुपृष्ठऋषिः सुतलंछंदः ॥
कूर्मोदेवता आसनशोधने विनियोगः ॥ ॥
मेरुपृष्ठऋषयेनमः शिरसि सुतलंछंदसे
नमः मुखे कूर्मोदेवतायैनमः हृदि आसन
शोधने विनियोगाय नमः सर्वांगेषु ॥ ॐ अं
आसनायनमः आधारशक्तयेनमः दक्षिणे
नमः वामलासनायनमः आत्मासनाय॥

नमः ॐह्रींकूर्मासनायनमः ॐश्रींपद्मासना
यनमः ॐह्लींअनन्तपत्रकर्णिकायेनमः ॐश्रीं
पृथिव्येनमः ~ पृथ्वित्वयाधृतालोका देवि
त्वंविष्णुनाधृता त्वंचधारयमांदेवि पवित्रंकु
रुचासनम् ~ ऊर्णस्तरणंकृत्वा पृथ्वीप्रार्थ्य ~
जपस्थानंमूलेनवीक्ष्य ~ अस्त्रायफडितिसं
प्रोक्ष्य ~ अस्त्रायफडितिॐऐंक्लींसंताड्य ~
डुमित्युमुक्त्य ~ आसनाग्नेयादिकोणेषु ~

श्री:
९८

ॐ गं गणपतये नमः ॐ दुं दुर्गायै नमः ॐ सं
सरस्वत्यै नमः ॐ क्षं क्षेत्रपालाय नमः ॥ इति
संपूज्य ॥ तत्र पद्मासनेनोपविश्य नाना
वसनाद्यलंकृतः शिवोऽहमिति भावयन् ॥
श्रीगुरूपदिष्टविधिना श्रीचक्रं संस्थाप्य ॥
मूलेन पुष्पांजलिं दत्वा ॥ स्ववामे भूतबलिं
दत्वा ॥ भूतानि यानीह वसंति भूतले बलिं
गृहीत्वा विधिवत्प्रयुक्तं अन्यत्र वासो परिक

लायंतु तमंतु चान्यत्र नमोस्तु तेभ्यः ॥ भूते
भ्यो नमः ॥ इति भूतबलिं दत्वा ॥ उत्तरे ॥ ॐन
मो भगवते शालभशाल्वाय पक्षिराजाय ॥
ममशत्रूंनाशाय नाशाय ह्रौं खख हुंफट् स्वा
हा ॥ श्रीशालभरुद्रश्रीपादुकां पूजयामिन
मः ॥ तद्वामे ॥ ॐनमोभगवति शालभिशा
ल्वि ममशत्रूंनाशाय नाशाय हुंफट् स्वाहा
श्रीशालभीदेवी श्रीपादुकां पूजयामिनमः

श्री·

पूर्वदिक्षु ~ ॐ सहस्रार हुं फट् श्रीसुदर्शना
य नमः ~ दक्षिणे ~ ॐ क्लीं स्फुर २ प्रस्फुर २ घो
र २ तनुरूप चट २ प्रचट २ कह २ वम २ बंध २
घातय २ हुं फट् श्री अघोरास्त्राय नमः ~ पश्चि
मे ~ ॐ उत्तिष्ठ पुरुष किं स्वापिषि भयं मे समु
पस्थितं यदि शक्यमशक्यं वा तन्मे भगवति
शामय स्वाहा ~ श्रीवनदुर्गायै नमः इति सं
पूज्य ~ स्वदक्षे गंधादि पूजोपकरणं निधाय ~

हांहूंफट् ~ इतिस्मरन्नाराचमुद्रया दिव्यदृष्ट्या
च ~ पुष्पादिकं विलोक्य ~ वामभागस्थं जलपू
र्णकुम्भं आमिति वामहस्तेन स्पृष्ट्वा ~ ह्रौं इति
दक्षकराग्रेण तत्स्थं जलं च स्पृष्ट्वा ~ रं इति दीप
शिखां च स्पृष्ट्वा ~ ततः करौ प्रक्षाल्य ~ वामे
ऐं गुरुभ्यो नमः ~ दक्षिणे ऐं गं गणपत
ये नमः ~ अग्रे ऐं श्रीपरदेवतायै नमः ~ इति
श्री· प्रणम्य ~ मूर्ध्नि ~ संवहमुद्रां विधाय ~ श्रीगु
४९

रुमंत्रमुच्चार्य ~ श्रीमच्चिद्रूपानंदनाथ स्वामि~
श्रीपादुकां पूजयामि नमः ~ इति शिरसि श्री
गुरुपादुकां विन्यस्य ~ पुनरनयैव विद्यया~
गंधादिना संपूज्य ~ गंधादि पंचमुद्रा प्रदर्श्य~
नमोस्तु गुरवे तस्मा इष्टदेवस्वरूपिणे यस्य~
वागमृतं हंति विषं संसार संज्ञकम् ~ इति न
मस्कार मुद्रया प्रणम्य ~ ग्रंग्रांसौः इति कर
शुद्धि विद्यया सुगंध द्रव्य मर्दनेन करौ सुरभी

त्य ~ सुगंधपुष्पं मर्दयित्वा ~ वामकरेणाति
मेश्च आघ्राय ~ सर्वंते विलयं यांतु येमांहिंस
न्तु हिंसकाः ~ मृत्युरोगभयक्लेशाः पतन्तुरि
पुमस्तके इति पठित्वा ~ नाराचमुद्रया तत्पु
ष्पमुत्तरस्यां दिशि क्षिपेत् ~ मूलेन सप्तधा
तिलकं कुर्यात् ~ पुनः पुष्पं षडंगेन शिरसि
क्षिपेत् ~ इति संपूज्य संविदं यथामंत्रं स्वी
श्री· कुर्यात् ~ तत्रानंदमयोभूत्वा ~ जपकामंत्र
१०

भूतानि पिशाचाः प्रेतगुह्यकाः येचात्रनिवसं
त्यन्ये देवता भुविसंस्थिताः ~ अपसर्पन्तुते
भूता येभूता भुविसंस्थिताः येभूताविघ्न
कर्तारस्ते नश्यन्तु शिवाज्ञया ~ पाषाण्डकारि
णो भूता भूता भूम्यन्तरिक्षगाः दिविलोकेस्थि
ता येच तेनश्यन्तु शिवाज्ञया ~ इतिछोटि
काभिस्तिसृभि स्तर्जनीमध्यमाभ्यां भूमौखं
तालत्रयदानेन वामपार्ष्णिघातत्रयेण ~

दिव्यदृष्ट्याच त्रिविधविघ्नानुत्सार्य ॥ छोटि
काभिर्दशभिर्दशदिग्बंधनं कुर्यात् ॥ चतुर्दि
क्षु वह्निप्राकारं संचिंत्य ॥ प्राणायामं कुर्या
त् ॥ तत्रप्रणवं षोडशवारमुच्चरन् दक्षांगु
ष्ठेन दक्षनासापुटं निरुध्य वामेन पवनं पूर
येत् ॥ ततस्तमेव चतुष्षष्टिवारमुच्चरन् द
क्षनासाकनिष्ठिकाभ्यां वामं पुटं च निरुध्य
श्री॰ द्वाभ्यां पवनं कुंभयेत् ॥ ततस्तमेव द्वात्रिं
२१

षड्वारसम्भव त्वामनासापुटं तथैवमनितम्य-
दक्षनासापुटेन रेचयेत्-- ॐ २८ पूरकं-
ॐ ६४ कुंभकं, ॐ ३२ रेचकम्--॥ इत्येकः प्रा
णायामः एतद्विपर्ययेण द्वितीयः--प्रथम
वत्तृतीयः--इत्थं प्राणायामत्रयेण निरस्त
समस्तकल्मषं स्वदेहं देवताराधनयोग्यं वि
भाव्य--भूतशुद्धिं कुर्यात्--॥ ॐ ह्रीं स्तम्भं हुं
फट् स्वाहा--इति स्वहृदि हस्तदानेनात्मर

तां विधाय ~ ऐं क्लीं सौः नमस्त्रिपुरसुंदरि
मां रक्ष २ ~ इति मूर्धादिपादांतं त्रिव्यापकं वि
न्यस्य ~ वामकर्णे ह्रीं ~ अमृकानंदनाथस्वा
मि श्रीपादुकां पूजयामि नमः ~ दक्षकर्णे
गं गणपतये नमः ~ मौलौ ~ मूलदेवतां ~
मूलेन सप्तधा स्वललाटे तिलकं कुर्यात् ~
ततो भूतशुद्धिं कुर्यात् यथा ~ अथ मूलाधा
श्री· रात् हंस इति मंत्रेण कुण्डलिनीं पृथिव्या
२८

सहस्राधिष्ठाने समानीय तत्र जले पृथ्वीली
नां विभाव्य ॰ तस्माज्जलेन सह मणिपूरके
समानीय तत्र वह्नौ जलं लीनं विभाव्य ॰ त
स्माद्वह्निना सहानाहते समानीय तत्र वा
यौ वह्निं लीनं विचिंत्य ॰ तस्मादाकाशेन
सहात्माचक्रे समानीय ॰ तत्रस्थ मनस्या
काशं लीनं संचिंत्य ॰ मनोनादे लीनं विभा
व्य ॰ पुनो पुनिं समर्प्य ॰ सहस्रदलकम ॰

लकर्णिकास्थ चंद्रमण्डलमध्य त्रिकोणा
न्तर्गत तेजोमयबिंदुरूप परमशिवेनांस
मर्थ्य ~ प्राणायामविधिना ~ यं इति वायु-
बीजं धूम्रवर्णं षोडशवारे [उच्चरन् प्रा] ... शरीरं पा
पपुरुषं, वामकुक्षिस्थितं पापपुरुषं कज्ज
लप्रभम् ब्रह्महत्याशिरस्कंधं स्वर्णस्तेय
भुजद्वयम् ~ सुरापानहृदायुक्तं गुरुतल्प
श्री॰ कटिद्वयम् ~ तत्संसर्गिपदद्वंद्व मंगप्रत्यंग-
२२

पातकम्॰ उपपातकरोमाणं रक्तश्मश्रु
विलोचनम्॰ खड्गचर्मधरं क्रुद्ध मंगुष्ठपरि
माणकम्॰ अधोमुखं कृष्णवर्णं पापं कु॰
क्षौ विचिंतयेत्॰ इति शरीरं पापपुरुषं सं
चिंत्य संशोष्य॰॥ रं इति वह्निबीजं रक्तवर्णं
चतुष्षष्टिवारं जपं स्तमेव संदह्य॰ वमित्य
मृतबीजं शुक्लवर्णं सहस्रारे विचिंत्य द्वात्रिं
शद्वारं जपेत्॰ तदुत्थामृतेन छ्या निष्पा

षं शरीरमुत्पाद्य ॰ ललाटस्थं लं इति पृथ्वी
बीजेन पीतवर्णेन सुदृढीकृत्य ॰ क्ष्रीं इति मू
लस्थेन बीजेन सैश्वर्यं विधाय ॰ सोहमिति
मंत्रेण कुण्डलिनीममृतलोलीभूतां पंचभू
तानि जीवात्मानंच ब्रह्मपथेन स्वस्वस्था
ने नियोजयेत् ॰ इति भूतशुद्धिः ॰ ततः शरी
रं निरस्तसमस्तकलुषं देवताराधनयोग्यं
श्री॰ विभाव्य ॰ हृदि हस्तं दत्वा प्राणप्रतिष्ठां कुर्यो
२४

२९ यथा — अस्यश्रीप्राणप्रतिष्ठामंत्रस्य — ब्र-
ह्माविष्णुशिवा ऋषयः — ऋग्यजुस्सामानि
छंदांसि पराप्राणशक्तिर्देवता आंबीजं ह्रीं
शक्तिः क्रौं कीलकम् ममश्रीप्राणप्रतिष्ठार्थे
विनियोगः — इतिकृतांजलिः स्थानान्यसेत् —
ॐ ब्रह्माविष्णुऋषिभ्योनमः शिरसि ॐ ऋग्यजु
स्सामछंदोभ्योनमः मुखे पराप्राणशक्तिर्देव
तायैनमः हृदि आं बीजायनमः गुह्ये — ह्रींश

शक्तये नमः पादयोः क्लौं कीलकाय नमः नाभौ
मम प्राणप्रतिष्ठार्थे विनियोगाय नमः सर्वांगेषु
इति ऋष्यादिन्यासः ~ ॐ आं ह्रीं क्रों अं कं खं गं
घं ङं. आकाशवायु वह्नि सलिल पृथिव्यात्मने
आं अंगुष्ठाभ्यां नमः हृदये ॐ आं ह्रीं क्रों ईं चं छं जं झं
ञं शब्दस्पर्श रूपरस गंधात्मने ईं तर्जनीभ्यां. शिरसे
स्वाहा ~ ॐ आं ह्रीं क्रों उं टं ठं डं ढं णं श्रोत्रत्व
प्री. चक्षुजिह्वाघ्राणात्मने ऊं मध्यमाभ्यां वषट्
२२
शिखायै

ॐ श्रांह्रींक्रों ऐं नं थं दं पं नं वाक्पाणिपाद पायू

पस्थात्मने ऐं अनामिकाभ्यां हुं ~ ॐ श्रांह्रींक्रों ॐ

पं फं बं भं मं वचनादान विसर्ग गमनानंदात्म

ने ॐ कनिष्ठकाभ्यां वौषट् ~ ॐ श्रांह्रींक्रों श्रं

यं रं लं वं शं षं सं हं ळं क्षः मनोबुद्ध्यहंकार ~

चित्तात्मने अः करतल करपृष्ठाभ्यां फट् ~

इति करन्यासः ~ एवं षडंगः ~ अथ ध्यानं ~

रक्ताब्धिपोतारुणपद्मसंस्थां पाशांकुशौ

त्रिशुलपासकपालान् सूलंकपालंदधतींकराब्जैः
रक्तांत्रिनेत्रांप्रणमामिदेवीम् ~ इतिप्राणशा
क्तिंध्यात्वा ~ हृदिहस्तंनिधाय ~ प्राणप्रतिष्ठां
कुर्यात् ~ ॐ आं ह्रीं क्रों यं रं लं वं शं षं सं हं हं
सः सोहं ममप्राणाः इहप्राणाः ~ १८ मम
जीवः इहस्थितः ~ १८ ममसर्वेंद्रियाणि इ
हस्थितानि ~ १८ ममवाङ्मनस्त्वक्चक्षुःश्रोत्रजि
श्री॰ ह्वानेत्रघ्राणप्राणा इहागत्य सुखंचिरंति
२८

हुंतु स्वाहा ॥ इति प्राणप्रतिष्ठां विसरद्वानः
त्वा निजं वपुर्ज्योतिर्मयं ध्यायेत् ॥ इति प्राण
प्रतिष्ठा ॥ अथ मातृकान्यासः ॥ सचात्रावि
धायां षुद्ध कला मूर्ति प्रपंच यागभेदैश्चतुर्विधः
षुद्धो ख्या प्यस्यां विद्यायां त्रयोदशाविधः ॥
षुद्धो बिंदु युतो विसर्गयुतो बिंदुविसर्गयु
तो हल्लेखाद्यो लक्ष्म्याद्यः कामबीजाद्यो
माया श्रीकामबीजाद्यो बालासंपुटितः ॥

परा संपुटितः श्रीविद्यान्वितः परमहंसा-
न्वितश्चेति ~ बालायुक्तो द्विविधः ~ तारोत्थ
कलान्यासः ~ तेजस्तनीयोथे कला मातृका
न्यासश्चेति ~ मूर्त्तिन्यासो [illegible]पि द्विविधः
केशवादि श्रीकण्ठादिभेदात् ~ चतुर्थः प्र
पंचयागः ~ तत्रादौ प्राणायामः ॥ अंआंइं
ईं उंऊं ऋंॠं लृंॡं एंऐं ओंऔं अंअः इति
पूरकः ~ कंखंगंघंङं चंछंजंझंञं टंठंडंढं

श्री.
५८

ळं तं थं दं धं नं पं फं भं बं मं ॰ इति कुंभकः ॥ ॰
यं रं लं वं शं षं सं हं लं क्षः इतिरेचकः ॥ ॰
इति प्राणायामं कृत्वा ॰ संकल्पं कुर्यात् ॰
अस्य श्री अंतर्मातृकान्यासमंत्रस्य श्री ब्रह्मा ॰
ऋषिः श्रीमातृका सरस्वती देवता हलोबी
जानि स्वराः शक्तयः अव्यक्तं कीलकम् ॰
मम श्री त्रिपुरांगत्वे नांतर्मातृकान्यासे वि ॰
नियोगः ॰ इति कृतांजलिः स्मृत्वा यथा ॰

विधिन्यसेत् ~ ॐ ब्रह्मऋषये नमः शिरसि ~
गायत्रीछंदसे नमो मुखे श्रीमंत्रमातृका सर
स्वती देवतायै नमः हृदि हलेभ्यो बीजेभ्यो
नमः गुह्ये स्वरशक्तिभ्यो नमः पादयोः ~
अव्यक्तकीलकाय नमः नाभौ मम श्रीत्रिपु
रांगत्वेन न्यासे विनियोगाय नमः सर्वांगेषु ॥ इति
ऋष्यादिन्यासः ~॥ अथ करन्यासः ~ अं अं
श्री· कं खं गं घं ङं आं अंगुष्ठाभ्यां नमः इं ईं चं छं जं
हृदयाय

झं ञं ईं तर्जनीभ्यां *(नमः शिरसे)* स्वाहा ॥ षं टं ठं डं ढं णं ॥
उं मध्यमाभ्यां *(नमः शिखायै)* वषट् षं एं तं थं दं धं नं ऐं अ
*(नमः कवचाय)* नामिकाभ्यां हुं षं ओं पं फं भं बं मं औं कनिष्ठ
*(नमः नेत्राभ्यां)* काभ्यां वौषट् षं अं यं रं लं वं शं षं सं हं लं *(नमः अस्त्राय)*
तः अः करतलकरपृष्ठाभ्यां फट् ॥ इतिक
रन्यासः ॥ एवमेव षडंगः ॥ अथ ध्यानं
व्योमेन्दौ रसनार्णकर्णिका *(म)* [illegible] बीद्वंद्वैः स्फु
रत्केसरं पत्रान्तर्गतपंचवर्गयमाला र्ण

द्विवर्गं क्रमात् ॥ प्राणाप्तास्वभिमुलानल-
लांगलियुजा न्तोरणीपुरे ञ्चहतं वरणोग्रं-
शिरसिस्थितं विषगाद प्रध्वांसिद्धत्युंजयं
मूलाधारधनिं क्रान्त्वा प्रबुद्ध्य प्राधिकुंड-
लीं ज्वलत्पावकसंकाशां सूक्ष्मतेजःस्वरू
पिणीमू ॥ मूलाधाराच्छिरः पद्मं सुषुम्नानी
विदारणतिं ॥ तया सुषुम्नाशिरःपद्मादह
तोवस्त्वहूपिणः ॥ निर्गतान्मात्रकावली

श्री॰
२९

सुषुम्णावर्त्मनातन्तुम् व्यापयित्वास्थिता
नेत्ता नेवं ध्यात्वा प्रविन्यसेत् ~ इति ध्यात्वा
मातृकांन्यसेत् ~ घं अं नमः घैं आं नमः इ
इत्यादि ~ घं अः नमः इत्यन्तम् ~ इतिक
ण्ठे षोडशदलकमले ॥ घं कं नमः इत्यादि ~
घैं ठं नमः इत्यन्तं ~ इति नाभौ दशदल
कमले। घं बं नमः इत्यादि लं नमः इत्य
न्तं ~ इति मूलाधारे चतुर्दलकमले पं हं

नमः ऐं क्षं नमः इत्याज्ञाचक्रे द्विदलक
मले ॥ इत्यन्तर्मातृकान्यासः ॥ अथ
सृष्टिक्रमेणान्तर्मातृकान्यासः ~ ऐं वं
नमः ऐं शं नमः ऐं षं नमः ऐं सं नमः
इति मूलाधारे चतुर्दले ॥ ऐं बं भं मं
ऐं यं नमः ऐं रं नमः ऐं लं नमः ~ इति
स्वाधिष्ठाने षड्दले ॥ ऐं डं नमः ऐं
श्री॰ ढं नमः ऐं णं नमः ऐं तं नमः ऐं थं

नमः षं दं नमः षं धं नमः षं नं नमः षं पं फं √नमः षं
नमः ~ इतिमणिपूरकेदशदले ~ षं कं नमः
षं खं नमः षं गं नमः षं घं नमः षं ङं नमः
षं चं नमः षं छं नमः षं जं नमः षं झं नमः
षं ञं नमः षं टं नमः षं ठं नमः ~ इत्यना
हतेद्वादशदले ~ षं अं नमः षं आं नमः ~
षं इं नमः षं ईं नमः षं उं नमः षं ऊं नमः
षं ऋं नमः षं ॠं नमः षं ऌं नमः षं ॡं नमः

षं ऌंनमः षं ॡंनमः षं ओंनमः षं औंनमः ~
षं अंनमः षं अः नमः ~ ॥ अथ विशुद्धौ षोड
शदले ~ षं हंनमः षं क्षंनमः ~ रत्याज्ञायां
द्विदले ~ रतिहृद्धिक्रमेणान्तर्मातृकान्यासः ~
अथ स्थितिक्रमः ~ षं डंनमः षं ढंनमः षं
णंनमः षं तंनमः षं थंनमः षं दंनमः षं
धंनमः षं नंनमः षं पंनमः षं फंनमः ~
रतिमणिपूरके दशदले ~ षं बंनमः षं भं

नमः ॐ मं नमः ॐ यं नमः ॐ रं नमः ॐ लं नमः
इति स्वाधिष्ठाने षड्दले ~ ॐ वं नमः ॐ शं
ॐ षं नमः ॐ सं नमः ~ इति मूलाधारे चतु
र्दले ~ ॐ हं नमः ॐ क्षं नमः ~ इत्याज्ञाचक्रे
द्विदले ~ ॐ अं नमः ॐ आं नमः ॐ इं नमः
ॐ ईं नमः ॐ उं नमः ॐ ऊं नमः ॐ ऋं नमः
ॐ ॠं नमः ॐ ऌं नमः ॐ ॡं नमः ॐ एं नमः
ॐ ऐं नमः ॐ ओं नमः ॐ औं नमः ॐ अं नमः

ऐं अः नमः ~ इति विशुद्धौ षोडशदले ॥ ऐं
कं नमः ऐं खं नमः ऐं गं नमः ऐं घं नमः ऐं ङं
नमः ऐं चं नमः ऐं छं नमः ऐं जं नमः ऐं झं
नमः ऐं ञं नमः ऐं टं नमः ऐं ठं नमः ॥
इति स्थितिक्रमेणान्तर्मातृकान्यासः ~ अथ
संहारक्रमः ~ ऐं हं नमः ऐं क्षं नमः ~ इत्या
ज्ञायां द्विदले ॥ ऐं वं नमः ऐं शं नमः ऐं षं
जी· नमः ऐं सं नमः ~ इति मूलाधारे चतुर्दले ~
५२

घं वं नमः घं भं नमः घं मं नमः घैं यं नमः
घैं रं नमः घं लं नमः ~ इति स्वाधिष्ठाने ष
ड्दले ~ घैं डं नमः घैं ढं नमः घं णं नमः
घैं तं नमः घं थं नमः घैं दं नमः घं धं नमः घैं
नं नमः घं पं नमः घैं फं नमः ~ इति मणि
पूरे दशदलकमले ॥ घैं कं नमः घैं खं नमः
घैं गं नमः घैं घं नमः घैं ङं नमः घं चं नमः
घैं छं नमः घैं जं नमः घैं झं नमः घैं ञं नमः

षं टं नमः षं ठं नमः ॰ इत्यनाहते द्वादशदले ॰ षं अं नमः षं आं नमः षं इं नमः षं ईं नमः षं उं नमः षं ऊं नमः षं ऋं नमः षं ॠं नमः षं ऌं नमः षं ॡं नमः षं एं नमः षं ऐं नमः षं ओं नमः षं औं नमः षं अं नमः षं अः नमः ॰ इति विशुद्धौ कण्ठे षोडशदले ॥॰ इति संहारक्रमेणान्तर्मातृकान्यासः ॰। अथ बहिर्मातृकान्यासः ॥ अस्य श्रीबहि

श्री॰
८२

मातृकान्यासमंत्रस्य ~ ब्रह्मा ऋषिः गायत्री
छंदः श्रीबहिर्मातृका सरस्वती देवता ह
लो बीजानि स्वराः शक्तयः अव्यक्तं कीलकं
मम श्रीत्रिपुरांगत्वेन बहिर्मातृकान्यासे वि
नियोगः ~ इति कृतांजलिः सन्न्यसेत् ~
ब्रह्मा ऋषये नमः शिरसि गायत्रीछंदसे
नमः मुखे श्रीबहिर्मातृका सरस्वती देव
तायै नमः हृदि हल्भ्यो बीजेभ्यो नमः गुह्ये

नमः स्वाहाय

लं वं घ्रां घं सं हं लं क्षः ग्रः करतलपृष्ठाभ्यांफट्
इतिकरन्यासः॥ एवंषडंगः॥ अथध्यानं
पंचाशद्वर्णभेदै र्विहितवदनदोष्पादहृत्कु
क्षिवक्षो देशांभास्वत्कपर्दा कलितशशिक
लां मिंदुकुंदावदातां। अक्षस्रक्कुंभचिंता लि
खितवरकरां त्रीक्षणांपद्मसंस्था मच्छाक
ल्पामतुच्छ स्तनजघनभरां भारतींतांनमा
मि॥ इतिध्यात्वा ऐं सौं। ब्लं ध्रां र इत्यादि

सर्वं हं लं ह्लः ह्लौं नमः ~ इति मूर्धादिपादांतं
विन्यस्य ~ षं अं नमः शिरसि षं आं नमः मु
खवृत्ते षं इं नमः दक्षनेत्रे षं ईं नमः वामे
षं उं नमः दक्षकर्णे षं ऊं नमः वामे षं ऋं
नमः दक्षनासायां षं ॠं नमः वामायां षं
ऌं नमः दक्षगल्ले षं ॡं नमः वामे षं एं नमः
षी॰ ऊर्ध्वोष्ठे षं ऐं नमः अधरोष्ठे षं ओं नमः ऊर्ध्व
९२ दन्तपंक्तौ ~ षं औं नमः अधो दन्तपंक्तौ षं अं न

मः चिबुके ॐ अं नमः शिरसि ॐ कं नमः द
क्षबाहुमूले ॐ खं नमः कूर्परे ॐ गं नमः म
णिबंधे ॐ घं नमः अंगुलिमूले ॐ ङं नमः
अंगुल्यग्रे ॐ चं नमः वामबाहुमूले ॐ छं
नमः कूर्परे ॐ जं नमः मणिबंधे ॐ झं नमः
अंगुलिमूले ॐ ञं नमः अंगुल्यग्रे ॐ टं नमः
दक्षपादमूले ॐ ठं नमः जानुनि ॐ डं नमः
गुल्फे ॐ ढं नमः अंगुलिमूले ॐ णं नमः

अंगुल्यग्रे ॥ ॐ लं नमः वामपादमूले ॐ थं नमः
जानुनि ॐ दं नमः गुल्फे ॐ धं नमः अंगुलिमू
ले ॥ ॐ नं नमः अंगुल्यग्रे ॥ ॐ पं नमः दक्षपार्श्वे
ॐ फं नमः वामे ॐ बं नमः पृष्ठे ॐ भं नमः ना
भौ ॐ मं नमः जठरे ॐ यं त्वगात्मनेनमः
हृदि ॥ ॐ रं असृगात्मनेनमः दक्षांसे ॐ लं
मांसात्मनेनमः ककुदि ॥ ॐ वं मेदसात्मने
नमः वामांसे ॐ शं अस्थ्यात्मनेनमः हृदादि

श्री॰
८८

दक्षपाण्यन्तं षं षंमज्जात्मनेनमः हृदादिवा
मपाण्यन्तं ॰ षं सं शुक्रात्मनेनमः हृदादिद
क्षपादान्तं षं हं प्राणात्मनेनमः हृदादिवाम
पादान्तम् षं ळं जीवात्मनेनमः हृदादिना-
भ्यन्तम् ॰ वं क्षं परमात्मनेनमः नाभ्यादि
मूर्धान्तम् ॰ इति शुद्धमातृकान्यासः ॰ प्र
थमेव सह्रिक्रमेण मातृकान्यासः ॰ प्रथा
नेनैव प्रकारेण संपुटितमातृकान्यासः

अथसंहारमातृकान्यासः ॥ ऐं हं परमात्मने
नमः नाभ्यादिमूर्धान्तम् । इत्यादि । ऐं क्षं नमः
शिरसि । इत्यन्तम् । अथस्थितिक्रममातृका-
न्यासः । ऐं डं नमः दक्षगुल्फे । ऐं ढं नमः अंगु
लिमूले । ऐं णं नमः अंगुल्यग्रे । ऐं तं नमः वा
मपादमूले । ऐं थं नमः जानुनि । ऐं दं नमः गु
ल्फे । ऐं धं नमः अंगुलिमूले । ऐं नं नमः अंगु
श्री. ल्यग्रे । ऐं पं नमः दक्षपार्श्वे ऐं फं नमः वामे-
६८

षं बं नमः पृष्ठे ~ षं भं नमः नाभौ षं मं नमः जठ
रे षं यं नमः त्वगात्मने हृदि षं रं असृगात्म
नेनमः ~ दक्षांसे ~ षं लं मांसात्मनेनमः ~ क
कुदि ~ षं वं मे दश्रा [illegible]त्मनेनमः ~ वामांसे ~ षं शं
अस्थ्यात्मनेनमः ~ हृदादि दक्षपाण्यन्तम् षं सं म
ज्जात्मनेनमः हृदादि दक्षपादान्तम् ~ षं हं प्रा
णात्मनेनमः हृदादि वामपादान्तम् षं ळं
जीवात्मनेनमः पादादिनाभ्यन्तम् ~ षं क्षं

परमात्मनेनमः नाभ्यादिपर्यौन्तम्॥ षं ग्रं
नमः शिरसि षं ग्रांनमः मुखवृत्ते षं इंन
मः दक्षनेत्रे षं ईंनमः वामे षं उंनमः द
क्षकर्णे षं ऊंनमः वामे षं ऋंनमः दक्षिण
नासि षं ॠंनमः वामे षं लृंनमः दक्षगण्डे
षं ॡंनमः वामे षं एंनमः ऊर्ध्वोष्ठे षं ऐं
अधरोष्ठे॥ षं ओंनमः ऊर्ध्वदन्तेषु षं औंनमः
श्री॰ अधोदन्तेषु॥ षं अंनमः चिबुके षं अः नमः
५८

शिरसि ॥ घं कं नमः दक्षिपाणिमूले घं खं न-
मः कूर्परे घं गं नमः मणिबंधे घं घं नमः
अंगुलिमूले घं ङं नमः अंगुल्यग्रे घं चं नमः
वामपाणिमूले घं छं नमः कूर्परे घं जं नमः
मणिबंधे घं झं नमः अंगुलिमूले घं ञं नमः
अंगुल्यग्रे घं टं नमः दक्षपादमूले घं ठं न-
मः जानुनि ॥ अथ हृल्लेखाद्यो मातृका
न्यासः घं ह्रीं नमः शिरसि इत्यादि ॥

अथलक्ष्म्याद्योमातृकान्यासः ~ अं श्रीं अं नमः
शिरसि ~ इत्यादि ~ अथकामबीजाद्योमातृ
कान्यासः अं क्लीं अं नमः शिरसि ~ इत्यादि ~
अथमायाश्रीकामबीजाद्योमातृकान्यासः ~
ह्रीं श्रीं क्लीं अं नमः शिरसि ~ इत्यादि ~ अथ
बालासंपुटितः ॥ ऐं क्लीं सौः अं नमः सौः
क्लीं ऐं शिरसि इत्यादि ~ अथपरासंपुटि
तमातृकान्यासः ~ सौः अं नमः सौः शिरसि ~

इत्यादि ॥ अथश्रीविद्यान्वितमातृकान्यासः
मूलं अं नमः शिरसि ॥ इत्यादि ॥ अथ हंसा
न्वितमातृकान्यासः ॥ हंसः अं नमः शिर
सि ॥ इत्यादि ॥ अथ परमहंसमातृकान्यासः
सोहं अं नमः शिरसि ॥ इति त्रयोदशविधो
मातृकान्यासः ॥ ततो नानाविधमातृकान्यासज्ञा
नं विद्यात् ॥ ततः स्वशरीरं पीठरूपं विचिं
त्य ॥ पीठन्यासं कुर्यात् ॥ तत्र मूलाधारे ॥

घं मण्डूकायनमः घं स्वाधिष्ठाने घं कालाग्नि
रुद्रायनमः मणिपूरके घं मूलप्रकृत्यैनमः
अनाहते घं आधारशक्त्यैनमः ~ हृदये कूर्मा
यनमः ~ तत्रैव ~ अनंतायनमः ~~ एवमेव
सर्वत्र ~ वराहायनमः पृथिव्यैनमः ~ तत्र
पश्चिमादि विलोमेन ~ इक्षुसमुद्रायनमः
मदिरासमुद्रायनमः ~ घृतसमुद्रायनमः
श्री० दुग्धसमुद्रायनमः ~ तन्मध्ये घं पू० तत्र
८०

खल्उविराजिताय नवरत्नमयद्वीपायनमः

तत्पश्चिमे ~ वं अं आं इं ईं उं ऊं ऋं ॠं पुष्परत्ना

यनमः ~ नैर्ऋत्ये ~ वं लृं लॄं एं ऐं ओं औं अं अः

वैडूर्यरत्नायनमः ~ दक्षिणे ~ वं कं खं गं घं

ङं नीलरत्नायनमः ~ आग्नेये ~ वं चं छं जं

झं ञं विद्रुमरत्नायनमः ~ पूर्वे वं टं ठं डं ढं

णं मौक्तिकरत्नायनमः ~ ईशाने ~ वं तं थं

दं धं नं मरकतरत्नायनमः ~ उत्तरे ~ वं पं फं

वं भं मं वज्ररत्नाय नमः ~ वायव्ये ~ षं यं रं
लं वं गोमेधरत्नाय नमः ~ मध्यत्त्वले ~ षं ~
क्षं षं सं हं लं क्षः पद्मरागरत्नाय नमः ~ तन्म
ध्यस्थले मध्ये ~ षं स्वर्णपर्वताय नमः ~
तदुपरि ~ नन्दनोद्यानाय नमः ~ तन्मध्ये
कल्पवृक्षेभ्यो नमः ~ तन्मध्ये वसंतादि षड्
ऋतुभ्यो नमः ~ तत्पश्चिमे ~ इंद्रियाश्विभ्यो
नमः ~ तत्पूर्वे ~ इंद्रियाश्वेगजेभ्यो नमः

तन्मध्ये ~ विचित्ररत्नभूमिकायैनमः ~ तस्यां
पश्चिमे ~ घं कालचक्रेश्वर्यैनमः ~ नैर्ऋत्ये ~
मुद्राचक्रेश्वर्यैनमः ~ दक्षिणे ~ मातृचक्रेश्व-
र्यैनमः ~ आग्नेये ~ रत्नचक्रेश्वर्यैनमः ~ पूर्वे
देशचक्रेश्वर्यैनमः ~ ईशाने ~ गुरुचक्रेश्वर्यैन
मः ~ उत्तरे ~ तत्त्वचक्रेश्वर्यैनमः ~ वायव्ये ~
ग्रहचक्रेश्वर्यैनमः ~ मध्ये मूर्तिचक्रेश्वर्यैनमः
कङ्कणतोयपरिधयेनमः ~ स्वर्णप्राका-

ायनमः - मणिमण्डपायनमः - तस्यनै
र्ऋत्यादिचतुष्कोणेषु - वामावर्तेन - कालरूपि
णीशक्तैनमः - देशरूपिणीशक्तैनमः -
आकाररूपिणीशक्तैनमः - शब्दरूपिणी
शक्तैनमः - मध्ये - संगीतयोगिनीभ्योनमः
तत्र समस्तगुप्तप्रकट सिद्धयोगिनीचक्रेभ्यो
नमः - तन्मध्ये - मणिमयवेदिकायैनमः
श्री॰ श्वेतच्छत्रायनमः - रत्नसिंहासनायनमः
७२

इतिहृदयलवविन्यस्य-दक्षांसे-ब्रह्मप्रेता
सनायनमः-वामांसे-विष्णुप्रेतासनाय
नमः-वामोरौ-रुद्रप्रेतासनायनमः दक्षो
रौ-ईश्वरप्रेतासनायनमः-सर्वांगे-स
दाशिवप्रेतासनायनमः- पुनर्दक्षांसे-ध
र्मायनमः वामांसे ज्ञानायनमः वामोरौ
वैराग्यायनमः दक्षोरौ-ऐश्वर्यायनमः-
मुखे-अधर्मायनमः वामपार्श्वे अज्ञाना

यनमः नाभौ ~ अवैराग्यायनमः दक्षपार्श्वे
अनैश्वर्यायनमः ~ पुनर्हृदि मायायैनमः
तत्रैव विद्यायैनमः ~ अनंतायनमः पद्मा
यनमः आनंदकंदायनमः संविन्नालायन
मः प्रकृतिमयपत्रेभ्योनमः ~ विकृतिम
यकेसरेभ्योनमः ~ पञ्चाशद्बीजभूषितस
र्वतत्त्वरूपायै कर्णिकायैनमः ~ तस्यामेव-
श्री· अं अर्कमण्डलायनमः ~ सं सोममण्डला
७२

यनमः रंवह्निमण्डलायनमः ~ सं प्रबोधा
त्मने सत्वायनमः रं प्रकृत्यात्मने रजसेन
मः तं मोहात्मने तमसेनमः ~ श्रां श्रात्मने
नमः ~ अं अंतरात्मनेनमः पं परमात्मने
नमः ह्रीं ज्ञानात्मनेनमः ~ कर्णिकाचतु
र्दिक्षुमध्येच ~ ज्ञानतत्वात्मनेनमः माया
तत्वात्मनेनमः कालातत्वात्मनेनमः वि
द्यातत्वात्मनेनमः परतत्वात्मनेनमः ~

पत्रेषु- मेधायैनमः प्रज्ञायैनमः प्रभायैनमः
विद्यायैनमः धृत्यैनमः स्मृत्यैनमः शुद्ध्यैन
मः विद्येश्वर्यैनमः ऐं परायैनमः अपरायै
नमः विरूपायैनमः परापरायैनमः ह्रं ह्रां
रं रीं इत्यादिलं लः ह्सौः श्रीमहात्रिपुरसुन्दरी
भगवतीयोगपीठासनायनमः- इतिपीठ
न्यासंविधाय- ऋष्यादिन्यासंकुर्यात्- ॥
श्री· ततःस्वमूलमंत्रेणप्राणायामंकुर्यात्- ॥
७४

यथा ~ मूलं १ पूरकं मूलं ४ कुंभकं मूलं २ रेचकं
इत्येकः प्राणायामः एतद्विपर्ययेणद्विती
यः प्रथमवत्तृतीयः ~ अस्यश्रीमहात्रिपु
रसुंदरीमंत्रराजस्य श्रीदक्षिणामूर्तिर्ऋषिः
पंक्तिश्छंदः श्रीमहात्रिपुरसुंदरीदेवता श्रीं
बीजं ह्रींशक्तिः क्लींकीलकम् ~ धर्मार्थका
ममोक्षार्थे पूजनेविनियोगः ~ श्रीदक्षिणा
मूर्तिऋषयेनमः शिरसि पंक्तिछंदसेनमो

मुखे ॐ श्रीमहात्रिपुरसुंदरी देवतायेनमः
हृदि ॐ श्रीं बीजायनमः गुह्ये ॐ ह्रीं शक्तये
नमः पादयोः ॐ क्लीं कीलकायनमः नाभौ
मम चतुर्वर्ग पुरुषार्थे सिद्धये पूजने विनियो
गः ~ सर्वांगे ~ अंगुष्ठयोः ॐ ऐं प्रथमकूटं
हृदयायनमः ~ तर्जन्योः ॐ क्लीं द्वितीयकू
टं शिरसे स्वाहा, मध्यमयोः ॐ सौः तृती
यकूटं शिखायै वषट्, अनामिकयोः ॐ ऐं

श्री· ७५

प्रथमकूटं कवचायहुं कनिष्ठकयोः ऐं क्लीं
द्वितीयकूटं नेत्राभ्यां वौषट् करतलकरपृ
ष्ठयोः ऐं सौः तृतीयकूटं अस्त्रायफट् रतिमू
लमंत्रन्यासः ऐं ह्रैं आत्मतत्त्वायनमः शि
रसि ऐं क्लीं विद्यातत्त्वायनमः मुखे ऐं सौः
शिवतत्त्वायनमः हृदये ह्रैं ऐं गुरुतत्त्वायन
मः नाभौ ऐं क्लीं शक्तितत्त्वायनमः जंघयोः
ऐं सौः शिवतत्त्वायनमः पादयोः रविवि

न्यस्य॰ चतुरासनन्यासं कुर्यात्॰ पादयोः
ऐं ह्रीं क्लीं सौः श्रीत्रिपुरसुंदरीदेव्यात्मासना
यनमः जंघयोः॰ ऐं ह्रैं ह्क्लीं ह्सौः श्रीत्रिपु
रवासिनीसर्वचक्रासनायनमः जान्वोः
ऐं ह्सैं ह्स्क्लीं ह्सौः श्रीत्रिपुराश्रीसर्वमंत्रासना
यनमः॰ मूलाधारे॰ ऐं ह्रीं क्लीं ब्लूं श्रीत्रिपुर
मालिनीसाध्यसिद्धासनायनमः॰ अथत्रिवि
श्री॰ धषडंगन्यासः॰ तत्रादौरत्नाषडंगन्यासः॰
७८

॥ ऐं क्लीं सौः नमः श्रीत्रिपुरसुंदरि मां रक्ष हृदया
यनमः ॥ एवं षडंगेषु ॥ विन्यसेत् ॥ षोडशा
र्णाः यास कैस्तु आद्यबीजपंचकं हृदि ॥ उत्तरबी
जत्रयं शिरसि तद्रूर्ध्वं कूटत्रयेण शिखा कवच
नेत्राणि ॥ अंत्यबीजपंचकम् ॥ अस्त्रायफट्
इति मूलषडंगन्यासः ॥ अथवान्यप्रकारेण ॥
मूलषडंगन्यासः ॥ श्रीं ऐं प्रथमकूटं सर्वेश्व
राहृल्लेखात्मने हृदयायनमः ॥ श्रीं क्लीं द्विती

यं बीजं नित्यतृप्ताप्रकृत्यात्मने शिरसे स्वाहा ॥
स्त्रूं सौः तृतीयं अनादि बोध प्रकृत्यात्मने शिखा
यै वषट् ॥ क्षैं ऐं प्रथमं स्वतंत्रता प्रकृत्यात्मने कव
चाय हुम् ॥ क्षौं क्लीं द्वितीयं नित्यमलुप्ता प्रकृत्या
त्मने नेत्राभ्यां वौषट् ॥ स्त्रः सौः तृतीयं अनंता
[illegible] प्रकृत्यात्मने अस्त्राय फट् ॥ इत्यं करष
डंगन्यासं विधाय शिवोहमिति भावयन् ॥
वक्ष्यमाण संक्षोभिन्यादि नवमुद्राः प्रापूणादि

श्री:
७८

चतुर्मुद्राश्च बद्ध्वा सर्वावयवभावेन कामकला
रूपमात्मानं ध्यात्वा॰ पुनरुत्थापनमुद्रां ब
द्ध्वा प्रातःस्मरणोक्तप्रकारेण मूलाधारात्कुंड
लिनीमुत्थाप्य॰ तथैव षट्चक्रपूजां विधाय॰
तत्तेजसा परिणतां श्रीपरदेवतां हृदयकम
लगतसिंहासने श्रीचक्रराजे कामेश्वरांकस्थां
सर्वाभरणयुक्तां त्रिखंडामुद्रितकरां ध्याये
त्॰ उद्यच्चंद्रोदयत्विष रक्तां पीयूषवारिधेः॰

मध्ये हेममयीं भूमिं स्मरेन्माणिक्यमण्डितां
तन्मध्ये नंदनोद्यानं मदनोन्मादनं महत्
नित्याभ्युदितपूर्णेंदुज्योत्स्नाजालविराजि
तम् सदासहवसंतेन कामदेवेनरक्षितम्
कदंबचूतपुंन्नाग नागकेसरचंपकैः बकुलैः
पारिजातैश्च सर्वर्तुकुसमोज्वलैः हुंकुंका
रमयैर्भृंगैः कूजाद्भिः कोकिलैश्चभैः नाना
श्री॰ वर्णैरथान्यैश्च द्विजसंघैर्निषेवितम् ॥४॥
७८ घै

श्रारिवकारंडहंसाद्यैः नानापक्षिभिरावृतम्
नानापुष्पलताकीर्णैः शोभितं वृक्षषण्डकैः
पर्यन्तदीर्घिकोत्फुल्ल कमलोत्पलसंचयैः
रजोभिर्धूसरं सम्यक्सेवितं मलयानिलैः ॥
ध्यात्वेवं नन्दनोद्यानं तदन्तः प्रांगनं स्मरेत्
शुद्धकांचनसंकाशां वसुधाभिरलंकृतम्
प्रांगनं चिंतयित्वेत्थं सुरसिद्धनिषेवितम्
तन्मध्ये मंडपं ध्यायेज्ज्ञानब्रह्माण्डमण्डलं

सहस्रादित्यसंकाशं चतुरस्रं सुशोभनम् र
त्नतेजःप्रभापुंज पिंजरीकृतदिङ्मुखम्
मध्यस्तंभविनिर्मुक्तं कोणस्तंभविराजितम्
महामाणिक्यवैडूर्ये रत्नकांचनभूषितम्
मुक्तादामवितानाढ्यं रत्नसोपानभूषितम्
मंदवायुसमाक्रान्तं गंधधूपतरंगितम्
रत्नचामरघंटादि विमानैरुपशोभितम्
श्री: जातीचंपकपुन्नाग केतकीमल्लिकादिभिः
७९

रक्तोत्पलल्लसितां भोज माधवीभिः सुपुष्पकैः
बद्धाभिश्चित्रमालाभिः सर्वत्र समलंकृताम्
तिर्यगूर्ध्वलसद्रत्नपुत्तलीकोटिमण्डिताम्
नानारत्नादिभिर्दिव्यैर्निर्मितां विश्वकर्मणा
तन्मध्ये विपुलां ध्याये द्वेदिकां शतयोजनाम्
सहस्रादित्यसंकाशां कोटिमाणिक्यमण्डि
ताम् ॥ चतुर्द्वारसमोपेतां माणिक्यद्वार
तोरणाम् ॥ प्रदीपैः पूर्णकुंभैश्च सर्वतः स

मलंकृताम् रत्नपीठस्थितैर्दिव्यै रागमैःपरि
भूणभितामू~ तदनन्तरान्तराप्रोद्यत्मालिदपेल
मंगलामू ~ मधुरोद्गारविविध गंधर्वस्तोत्रः
संहितामू~ शृंगाररससन्नद्धै नवयौवनलं
पटैः भ्रमरीभिवकैर्नाना मणिभूषणभूषि
तैः ~ वीणावीणुमृदंगादि वादनेनचनर्त
कैः॥ श्रीणायथिर्महादेवी परीतांपरितस्स
श्री· दा रत्नसिंहासनंतस्या वेद्यामध्येसमेत्य
८०

मम् ॥ विरिंचिरुद्रविष्णवीशा प्रावपादचतुष्टयं
सदाशिवमयं साक्षात्तस्मिन् परशिवात्मकम् ।
पुष्पपर्यंकमैश्वर्यं तत्रश्रीचक्रनायकम् । त-
न्मध्ये योनिमध्यस्थे श्रीमड्डि(ड्या)नपीठके प-
र्यंकबद्धविलसत्स्वस्तिकासनशालिनीम् ।
ध्यायेत्परशिवांकस्थां पद्ममध्ये ज्वलाकृतिं
ततो ध्यानं प्रवक्ष्यामि त्रिदशैःसेवनीयकम् ॥ ——
ततः पद्मनिभां देवीं बालार्ककिरणारुणाम्

जपाकुसुमसंकाशां दाडिमीकुसुमोपमाम् ।
पद्मरागप्रतीकाशां कुंकुमोदकसन्निभाम् ॥
स्फुरन्मुकुटमाणिक्य-किंकिणीजालमण्डि
ताम् । कालालिकुलसंकाशां कुटिलालक
पल्लवाम् । प्रत्यग्रारुणसंकाशां वदनांभोज
मण्डलाम् । किंचिदर्धेंदुकुटिल ललाटष्ट
डुपट्टिकाम् । पिनाकिधनुराकार भ्रूलतां पर
श्री० मेश्वरीम् । आनंदमुदितोल्लोल लीलांदोलि
८१

तलोचनाम् स्फुरन्मयूखसंघात विलसद्धेमकुं
डलाम् विश्वकर्मादिनिर्माण सूत्रसुस्पष्टना
सिकाम् रक्तविद्रुमबिंबाभ रक्तोष्ठीमहजोप
माम् दाडिमीबीजवज्राभ दन्तपंक्तिविराजि
ताम् स्मितमाधुर्यविजित माधुर्यरससागरा
म् अनौपम्यगुणोपेत चिबुकोद्देशशोभिता
म् कंबुग्रीवां महादेवीं मृणाललसितैर्भुजैः
सतिकंकणकेयूर भारविद्धैः प्रशोभिताम्

रक्तोत्पलदलाकार सुकुमारकरांबुजाम् ॥ क
रांबुजनखज्योत्स्ना विराजितनभःस्थलीम् ॥
मुक्ताहारलतोपेत समुन्नतपयोधराम् ॥ त्रिव
लीवलनायुक्त मध्यदेशसुशोभिताम् ॥ लाव
ण्यसरिदावर्त्ता कारनाभिसुशोभिताम् ॥ ग्रन
वैरत्नखचित कांचीयुक्तनितंबिनीम् ॥ नितंबबिं
बद्विरद रोमराजीवरांकुशाम् ॥ कदलीललित
स्तंभ सुकुमारोरुमीश्वरीम् ॥ गूढगुल्फपदद्वं

द्ध प्रपदाजितकच्छपाम्॥ ब्रह्मविष्णुशिरोरत्न
निर्घृष्टचरणांबुजाम्। तनुदीर्घांगुलीभास्वन्न
खचंद्रविराजिताम्। पीनांसुप्रांतसंकाशकां
तिसंतानहासिनीम्। लौहित्यजितसिंदूरज
पादाडिमरागिणीम्। रक्तवस्त्रपरीधानां पा-
शांकुशाकरोद्यताम्। रक्तपुष्पनिविष्टांव र-
त्नाभरणभूषिताम्। चतुर्भुजांत्रिनेत्रांच पंच
बाणधनुर्धराम्। कर्पूरशकलोन्मिश्रतांबूल

पूरितानननाम् महाद्भुगमदोद्याम अंकुमारु
णविग्रहाम् सर्वशृंगारवेषाढ्यां सर्वालंका
रभूषिताम् जगदाह्लादजननीं जगद्रंज
नकारिणीम् जगदाकर्षणकरीं जगत्का
रणरूपिणीम् सर्वमंत्रमयींदेवीं सर्वसौ
भाग्यसुंदरीम् सर्वलक्ष्मीमयींनित्यां प
रमानंदसुंदरीम् एवंध्यायेन्महेशानीं
श्री· महात्रिपुरसुंदरीम् एवंध्यात्वामानसोप
८२

चारैस्संपूज्य ॥ मनसायथाशक्तिजपंकृत्वा ॥
होमंकुर्यात् ॥ तत्रमूलाधारे ॥ आत्मान्तरा
त्म ज्ञानात्म परमात्ममयं चतुरस्रं कुण्डंवि
भाव्य ॥ तत्रचिदानंदाग्नौ ॥ मूलंअहंतांजु ॥
होमिस्वाहा ॥ मूलंअसत्यंजुहोमिस्वाहा
मूलं पैशुन्यंजुहोमिस्वाहा ॥ मूलंकामंजु
होमिस्वाहा ॥ मूलंक्रोधंजुहोमिस्वाहा ॥
मूलं लोभं जुहोमिस्वाहा ॥ मूलंमोहंजु

होमिस्वाहा ~ मूलंमदं जुहोमिस्वाहा ~ मूलं
मात्सर्यं जुहोमिस्वाहा ~ इतिहुत्वा मूलेनत्रयं
दद्यात् ~ धर्मो धर्मेहविर्दीप्ते स्वात्माग्नौम
नसास्रुचा सुषुम्णावर्त्मेनानित्य मत्तवृ
त्तीर्जुहोम्यहम् ~ स्वाहा ~ मूलं ~ प्रकाशाका
शहस्ताभ्यां प्रवलंब्योन्मनीस्रुचम् ~ धर्मा
धर्मकलास्नेह पूर्णां वह्नौजुहोम्यहं स्वाहा
श्री॰ मूलं अंतरनिरन्तरनिरिन्धन मेधमाने मा

यां प्रकार परिपंथिनि संविदग्नौ ॥ कस्यां वि-
दधुत्तमरीचिविकासिभूमौ विश्वं जुहोमि
वसुधादिशिवावसानम् ॥ इति तृतीयां
पूर्णां दत्वा ॥ पुनर्मूलदेवीं स्वदत्ते बहिः पूजा
र्थं सामान्यार्घ्यं कुर्यात् ॥ इत्यन्तर्यजनवि
धिः ॥ ततः स्वात्मानं कामकलारूपं विचिं
त्य ॥ तदुपरि मूलदेवीं ध्यायेत् ॥ स्ववामभा
गे षट्कोणान्तर्गतेन त्रिकोणबिंदु बाह्यवृ

तचतुरस्रं विधाय ~ स्वदक्षे त्रिकोणवृत्तं बिंब
भं मण्डलं भूमौ विरचय्य ~ तत्राधारशक्तये
नमः ~ इति संपूज्य ~ तत्र मूलेन क्षालितं
त्रिपादकं संस्थाप्य ~ तदुपरि ~ प्रक्षाल्य फ
ट् ~ इति शोधितं ~ नम इति पूरितं शंखा
दिपात्रं संस्थाप्य ~ तत्र गंगे चेति तीर्थमा ~
वाह्य ~ ऐं इति मूलेन गंधपुष्पैर्निक्षिप्य ~
श्री॰ वह्निसोमसूर्यकलाभ्यो नमः ~ इति संपू
८२

म्य॰ धेनुयोनिमुद्रांप्रदर्श्य॰ मत्स्यमुद्रयाछा
द्य॰ स्वमूलमंत्रेण च पूजयेत्॰ इतिसामान्या
र्घ्यविधिः॰ अनेनसामान्यार्घ्योदकेन स्ववा
मभागेकृतमण्डलमभ्युक्ष्य॰ ॐह्रींमण्डूका॰
यनमः कालाग्निरुद्रायनमः मूलप्रकृत्यैन
मः आधारशक्त्यैनमः कूर्मायनमः अनंता
यनमः वराहायनमः पृथिव्यैनमः सुधा
म्बुधयेनमः नवरत्नविराजित नवखण्डम

यष्टीपायनमः पद्मरागखचिताङ्गायनमः सु
वर्णगिरयेनमः नंदनोद्यानायनमः कल्प
वनायनमः पद्मवनायनमः विचित्ररत्न
खचिताङ्गायनमः चिंतामणिमण्डपायनमः
नवरत्नखचितवेदिकायैनमः रत्नसिंहा
सनायनमः ~ तन्मध्ये ~ धर्मायनमः ज्ञाना
यनमः वैराग्यायनमः ऐश्वर्यायनमः ~
श्री· अधर्मायनमः ~ अज्ञानायनमः अवैराग्या
८६

यनमः॰ अनैश्वर्यायनमः॰ संसत्त्वायनमः॰
रंरजसेनमः तंतमसेनमः आंआत्मनेनमः
अंअंतरात्मनेनमः॰ पंपरमात्मनेनमः ह्रीं
ज्ञानात्मनेनमः जयायैनमः विजयायैनमः
कीर्त्यैनमः प्रीत्यैनमः प्रभायैनमः श्रद्धा
यैनमः मेधायैनमः मूलंश्रीत्रिपुरसुंदरी॰
योगपीठायनमः॰ इतिसंपूज्य॰ नमस्कृ॰
त्वाधारंप्रक्षाल्य मण्डलोपरि संस्थाप्य॰

रं इति वह्निमण्डलाय दशकलात्मने नमः ~
इति प्रपूज्य ~ फट् इति कलशं प्रक्षाल्य ~ ऐं
संदीपिनि संदीपिनि ज्वालामालिनि ह्रीं ~
इति संदीपिनीविद्यया ~ योनिमुद्रया संदी
प्य पानकेन प्रपूर्य ~ रक्तवस्त्रमाल्यादिना ~
संभूष्य ~ देवीबुद्ध्या संस्थाप्य ~ ॐ ऐं ह्रीं श्रीं
श्रीमहात्रिपुरसुंदरी कलशं संस्थापयामि
श्री. नमः इति कलशं संस्थाप्य ~ धेनुमुद्रया
८७

ष्टनीकृत्य । द्रव्यं सुधूपितं कृत्वा, शंभुना
च यथा पूर्वं विष्णुना च यथा पुरा ब्रह्म
णा च यथा पूर्वं तथा त्वां स्थापयाम्यहम्
इत्याधारोपरि कलशं संस्थाप्य । ॐ अर्क
मण्डलाय द्वादश कलात्मने नमः । इति
कलशं संपूज्य । कर्पूरादिना सुवासितं
कृत्वा । ॐ चंद्रमण्डलाय षोडश कलात्म
नेनमः ॥ इति द्रव्ये च संपूज्य । फट् इति ।

संरक्ष्य - हुं मित्यवगुंठ्य - मूलेनसंवीक्ष्य -
सामान्यार्घ्येण नमस्तुभ्यमित्य - मूलेनगंध
माघ्राय - ॐ मे पुष्पं दत्वा - पुष्पमोचनं कु
र्यात् - तत्रादावावाहयेत् - ॐ ह्रीं परमस्वा
द्दिनि परमाकाशशून्यवाहिनि चंद्रसूर्या
ग्निभक्षिणि पात्रंविश २ हुं २ स्वाहा - ॥
इत्यावाह्य - स्थापयेत् - एकमेवपरंब्र
श्री. ह्म स्थूलसूक्ष्ममयं ध्रुवम् - कचोद्भवां

ब्रह्महत्यां तेनतेनाप्नुयाम्यहम्॥ ॐवांवींवूं
वैंवौंवः ब्रह्मशापमोचितायै सुरादेव्यैनमः २
सूर्यमण्डलसंभूते वरुणालयसंभवे ब्रमा
बीजमयेदेवि शुक्रशापाद्विमुच्यताम्॥ ॐ
सांसींसूंसैंसौंसः शुक्रशापमोचितायै सु
रादेव्यैनमः॥ २ वेदानांप्रणवोबीजं ब्रह्मा
नंदमयोयदि तेनसत्येनते देवि ब्रह्मह
त्यांव्यपोहतु॥ २ ॐह्रींश्रींक्रांक्रींक्रूंक्रैंक्रौं

क्षः सुराकृष्णापापं विमोचय २ प्रपूतं स्राव
य २ स्वाहा ~ २ हंसः शुचिषदित्यादि ~ ॥
ॐ हंसः शुचिष द्वसुरन्तारिक्षसद्धोतावेदिष
दतिथिर्दुरोणसत् नृषद्वरसदृतसद्व्योमस
दब्जागोजा ऋतजा अद्रिजा ऋतम् ~ २ पाव
मानः परं ब्रह्म पावमानः परोरसः पाव ~
मानं परं ज्ञानं तेन ते पावयाम्यहम् ~ ब्रह्म
श्री.
८५
पापविनिर्मुक्ता त्वं मुक्ता शुक्रपापतः वि

मन्त्राहृष्णा पूजयेन तेनते पावयाम्यहम्॥ १२
ऐं श्रीं क्लीं अमृते अमृतोद्भवे अमृतवर्षिणि
अमृतं स्रावय २ ऐं ग्रां विघ्नकलांते अमृते
श्वर्यै नमः गंगेचेति अंकुशमुद्रया। बाह्य
योनिमुद्रां बद्ध्वा आनंदभैरवं ध्यायेत्॥
सूर्यकोटिप्रतीकाशं चंद्रकोटिसुशीत-
लं अष्टादशभुजैर्युक्तं पंचवक्त्रं त्रिलोचनम्
अमृतार्णवमध्यस्थं ब्रह्मपद्मोपरिस्थितं

ष्टबाहुं नीलकण्ठं सर्वाभरणभूषितम् ॥
कपालखट्वांगधरं घंटाडमरुवादिनम् पाशां
कुशधरं देवं गदामुसलपाणिकम् खड्गखे
टकपट्टिश मुद्गरशूलकुंतिनम् विचित्रखे
टकं मुण्डं वरदाभयपाणिकम् लोहितां
गं सदेवीकं ब्रह्माच्युतनमस्कृतम् आनंद
भैरवं ध्याये योगमोक्षैककारणम् इति
श्री० ध्यात्वा आनंदभैरवाय विद्महे व्रधेनारी
४०

श्वराय धीमहि तन्नो र्धनारीश्वरः प्रचोदयात् २
ऐं आनंदभैरवाय वौषट् ॥ इति दक्षायाश्रव
ण्य ॥ आनंदभैरवं कोपविह्वां सुरादेवीं ध्या
येत्तथा ॥ भावयेच्च सुरांदेवीं चंद्रकोट्याघु
तप्रभाम् ॥ हिमकुंदेन्दुधवलां पंचवक्त्रां
त्रिलोचनाम् ॥ अष्टादशभुजेर्युक्तां सर्वानं
दकरोद्युताम् प्रहसंतीविशालाक्षीं देवीं
देवस्य संमुखीम् ॥ इति ध्यात्वा ॥ सहस्र

मलवरयक्तं सुरादेव्यै बौषट् ~ इति दत्वा दा
प्रणम्य ~ आनंदभैरव भैरव्यौ संपूज्य ~ ~
द्रव्यमध्ये दक्षिणावर्त्तेन त्रिपंक्त्या ~ अं १६
कं १६ थं १६ इति मातृकाचक्रं विलिख्य ~ ॥
तन्मध्ये ~ हं लं क्षः विलिख्य ~ एतत्समा
वेशाद् द्रव्य मध्ये, अमृतं विचिंत्य ~ धेनुमुद्रं
या, अमृतीकृत्य ~ वमिति सुधाबीजं मूल
मष्टधा जप्त्वा पठेत् ~ इति कलशास्था

श्री·
९१

पनम् ॥ अथविष्णोर्घार्घ्यपूजनम् ॥ सामान्या
र्घ्यजलेन यक्षकर्दमादि गंधद्रव्यमिश्रितेन
भूमिं विलिख्य ॥ तत्रचतुरस्रवृत्तषट्कोण
त्रिकोणात्मकं मण्डलं विधाय ॥ ॐश्रीपरदे
वताया ॥ विष्णोर्घार्घ्याधारमण्डलायनमः ॥
इति मण्डलं संपूज्य ॥ ॐ मूलं नमः ॥ इति
त्रिकोणमध्ये संपूज्य ॥ त्रिकोणाग्रकोणे ॥
ॐ प्रथमकूटंनमः ॐ वामे द्वितीयकूटंनमः

दक्षिणे ॐ तृतीयकूटं नमः ॥ इति त्रिकोणं
संपूज्य ॥ षट्कोणकोणेषु षडंगं संपूज्य ॥
चतुरस्रे ॥ स्वाग्रादिचतुर्दिक्षु मध्ये च ॥ पंच
रत्नानि पूजयेत् ॥ ॐ स्लूं गगनरत्नाय न
मः ॐ स्लूं स्वर्गरत्नाय नमः ॐ स्लूं मर्त्यर॰
त्नाय नमः ॐ प्लूं पातालरत्नाय नमः ॐ ह्लूं
नागरत्नाय नमः ॥ इति पंचरत्नानि पूजये
त् ॥ मूले विघ्नोघाब्धिमण्डलाय नमः मूले

श्री॰
९२

नत्वालिंतं शंखाधारं गृहीत्वा यं श्रीपरदेवताया
विशेषार्घ्याधारं संस्थापयामीति संस्थाप्य
प्रथमकूटमुच्चार्य ~ मं वह्निमण्डलाय ध
र्मप्रद दशकलात्मने श्रीपरदेवताया वि~
शेषार्घ्यपात्राधाराय नमः ~ इत्याधारं सं
स्थाप्य संपूज्य ~ तदुपरि प्रादक्षिण्येन वह्ने
र्दशकलाः पूजयेत् ~ बं यं धूम्रार्चिषे नमः
भं रं ऊष्मायै नमः मं लं ज्वलिन्यै नमः ~

घं थं ज्वालिन्यैनमः घंफुं विस्फुलिंगिन्यैनमः
घं घं सुश्रियैनमः घं सं स्वरूपायैनमः घंहं
कपिलायैनमः घं लं हव्यवाहायैनमः ॥
घं त्तं कव्यवाहायैनमः ॥ इति संपूज्य स्व॰
र्णादिरचितं पात्रमस्त्रेण प्रक्षाल्य ॥ घंश्री॰
परदेवताया विशेषार्घ्यपात्रं संस्थापया॰
मीति संस्थाप्य ॥ द्वितीयकूटमुच्चार्य ॥ सं
सूर्यमण्डला [illegible] दशकलात्मने श्रीपरदेवता

पीर्घप्रदङ्का

श्री॰
६१

याविमोघाद्योपात्राय नमः ॥ इति संपूज्य ॥
तत्र पूर्वोक्तमण्डलं विभाव्य ॥ तथैव संपूज्य ॥
ह[illegible] (जो) कारेण सूर्यस्य द्वादश कला संपूजये
त् ॥ घं कं भं तपिन्यै नमः घं खं बं तापिन्यै न
मः घं गं फं धूम्रायै नमः घं घं पं मरीच्यै नमः
घं ङं नं (ज्वलिन्यै) [illegible] नमः ॥ घं चं यं रुच्यै नमः घं छं
दं सुषुम्णायै नमः घं (जं) [illegible] थं भोगदायै नमः
घं झं तं विश्वायै नमः घं ञं णं बोधिन्यै नमः

ॐ टं ढं धारिण्यै नमः ॥ ॐ ठं ढं (ई) ब्रमायै नमः ॥
इति संपूज्य कलशस्थजलं पात्रान्तरे (तोदू) तोदू
त्य ॥ मूलं विलोममातृकां पठं स्तत्पात्रमा
पूर्य ॥ ऐं इत्यनामिकांगुष्ठाभ्यां पुष्पेण ॥
तत्पात्रस्थं जलमालोड्य ॥ तत्पुष्पं निरस्य ॥
चंदनागुरुकर्पूरादिना पंकलालित्तं पुष्पं
निक्षिप्य ॥ सौरि निगालिनी मुद्रा (या) निरीक्ष्य
ॐ तृतीयकूटं सोममण्डलाय कामप्रद ॥

श्री॰
९४

षोडशकलात्मने श्रीपरदेवतायाः विष्णो-
वाक्यामृतायनमः ~ इतिसंपूज्य ~ पूर्वो-
क्तमण्डलंविभाव्य ~ षं अं अमृतायैनमः
षं आं मानदायैनमः ~ षं इं पूषायैनमः ~
षं ईं तुष्ट्यैनमः षं उं पुष्ट्यैनमः षं ऊं रत्यै-
नमः षं ऋं धृत्यैनमः षं ॠं शशिन्यैनमः
षं लृं चंद्रिकायैनमः षं लॄं कान्त्यैनमः षं
एं ज्योत्स्नायैनमः षं ऐं श्रियैनमः षं ओं

प्रीत्यैनमः ~ पें औं प्रंगदायैनमः ~ पें प्रं पूर्णा
यैनमः पें प्रः पूर्णाहुतायैनमः ~ इतिसंपू
ज्य ~ पूर्ववत्कृत्तिचक्रं विलिख्य ~ तन्मध्ये
हं लं क्षः विलिख्य ~ योनिमुद्रां बद्धा ~ गुरू
पदिष्ट प्रकारेण मूलाधारात्कुण्डलिनी
मुत्थाप्य ~ षट्चक्रभेदक्रमेण सुषुम्णा
वर्त्मना ब्रह्मरंध्रस्थ चिद्बिंदुमण्डलं नी
त्वा ~ तत्रस्थितपरमशिवे संयोज्य ~ तयोः

श्री·
६२

शिवयोस्तयोः सामरस्यसुखानुभवगलिता
मृतधारां संचिंत्य । ततो निर्गत्तां तां यो
निमुद्रोल्लासितकरे आनीय । धं मूलविद्यां
ते । ब्रह्माण्डखण्डसंभूतमशेषरसनिर्भर
मापूरितं महापात्रं पीयूषरसमावह ।
ऐं अमृते अमृतोद्भवे अमृतेश्वरि अमृतव
र्षिणि अमृतं स्रावय २ जूं सः स्वाहा । इति
तस्मिन्नामंत्र्य । सोः तद्रूपे लोकत्रस्यत्वं

दत्वाध्येचित्स्वरूपिणि ॥ मत्वा परामृताकारं
मयिचित्स्फुरणंकुरु ॥ इतित्रिरभिमंत्र्य ॥ ऐं
प्लुंझ्रांझ्रूंसः अमृते अमृतोद्भवे अमृतेश्वरि ॥
अमृतवर्षिणि अमृतं स्रावय २ स्वाहा ॥ इत्य
मृतेश्वरीविद्यया चतुर्वारमभिमंत्र्य ॥ पुनस्ता
मेवोच्चार्य ॥ ऐं अमृतेश्वरी श्रीपादुकां पूज
यामिनमः ॥ इतिसंपूज्य ॥ ऐं वद वद वा
श्री·
९८
ग्वादिनि ऐं क्लीं क्लिन्ने क्लेदिनि क्लेदय महा

त्तोमंकारु२त्क्रींसो:मोत्तंक्वारु२ह्सौसहौः रति
दीपिनी विद्यया संपूज्य तिथिनित्याः संपू
ज्य २ धेनुयोनिमत्स्यमुद्रात्रयं प्रदर्श्य २ त्रि
शिखापद्मसंक्षोभिण्यादि नवपाशादि चतु
र्मुद्राः प्रदर्श्य नमस्कारमुद्रया प्रणमेत् २
इति विघ्नाघाद्येस्थापनविधिः २ प्रथश्रीपा
त्रविधिः २ तत्रात्मश्रीचक्रयोर्मध्ये त्रि
कोणषट्कोणवृत्तचतुरस्रं विलिख्य २ ॥

चतुरस्रे ~ पूर्णगिरिपीठाय नमः उड्डियान
पीठाय नमः ~ कामरूपपीठाय नमः जाल
धरपीठाय नमः ~ इति संपूज्य ~ षट्को
णे षडंगं संपूज्य ~ त्रिकूटेन त्रिकोणं सं
पूज्य ~ मध्ये आधारशक्तये नमः ~ इति सं
पूज्य ~ त्रिकोणगर्भे त्रिकोण षट्कोणभू
षितां यंत्रिकां संस्थाप्य ~ नम इति सामा
श्री. न्यार्घोदकेनाभ्युक्ष्य ~ पूर्ववद्वह्नेः दशक
९८

लासंपूज्य ॥ यं रं वह्निमण्डलाय दशाक ॥

लात्मने नमः ॥ इति संपूज्य ॥ षट्कोण

षडंगं च संपूज्य ॥ मध्ये मूलेन देवीं संपू

ज्य ॥ फट् इति पात्रं प्रक्षाल्य ॥ ॐ ह्रूं ब्रह्मा

ण्ड चषकाय नारिकीलाय स्वाहा ॥ इति

नारिकील पात्रं प्रक्षाल्य ॥ यं श्रीत्रिपुरा

भगवती श्रीपात्रं संस्थापयामि नमः ॥

इति नारिकील पात्रं यंत्रिको परि संस्था

ष्य॰ पूर्ववद्द्वादशकलाः संपूज्य॰ ॐ अं अर्क
मण्डलाय द्वादशकलात्मने नमः॰ इति
संपूज्य॰ त्रिकोणषट्कोणवृत्तं पात्रे वि
लिख्य॰ समस्तव्यस्तमंत्रेण संपूज्य॰ वमि
ति वरुणबीजं विलोममातृकापठनसहि
तेन त्रिकोणं प्रपूरये जलेन च भागमेकं प्रपू
र्य॰ तत्र सुगंधादि निक्षिप्य॰ पूर्ववत्
श्री॰ षोडशकलाः संपूज्य॰ ॐ षोडशकला
९८

त्मने सोममण्डलायनमः ॥ इति संपूज्य ॥
पूर्वैवद्यंत्रं द्वौ विलिख्य ॥ मूलखण्डत्रये
ण त्रिकोणं संपूज्य ॥ षट्कोणेषडंगंच ॥
गंगेचेतितीर्थमावाह्य ॥ आनंदभैरवभैर
वौ ध्यात्वा स्वमंत्रेणच संपूज्य ॥ ॐ ह्लुं गग
णरत्नेभ्योनमः स्लुं स्वर्गरत्नेभ्योनमः
ह्लुं नागरत्नेभ्योनमः ॥ तत्रभूमौचतुर॥
श्रविंशं विलिख्य ॥ तत्रमांसादिपात्राणि

संस्थाप्य ~ यमिति संप्रोक्ष्य ~ रमिति संद
ह्य ~ वमित्याप्लाव्य ~ येनमुद्रयामृतीकृत्य ~
योनिमुद्रांप्रदर्श्य ~ मत्स्यमुद्रयाच्छाद्य ~ आ
नंदेश्वरभैरवमंत्रंदशधा पठित्वा ~ इदंमंत्रं
वपठेत् ~ छागलाजे॰ मांस्यादि हतनूपाय ~
विष्णवे ~ बलार्थं शिवशक्त्योस्तं प्रपद्ये वि
ष्णुमव्ययम् ~ प्रतर्पयामि बलार्थं पवि
श्री॰ त्रीभवसंप्लुतम् ~ ह्रीं हरयेनमः ~ १० ॥
३४

प्रतद्विष्णुःस्तवते वीर्येण मृगोनभीमः कुचरो
गिरिष्ठः यस्योरुषु त्रिषु विक्रमणेषु धियक्षि
यंति भुवनानि विश्वा ॥ इति मांसमपूर्णोधनम् ॥
कृतावतारो हरिणा कलिना पीडितं जगत् ॥
बलिना निग्रहीतं च कौलिकानां हितेच्छया ॥
भैरवी परितोषार्थं स्वयं मीनो भवद्धरिः ॥
ॐ ह्रीं हरये नमः ॥ १० त्र्यंबकं यजामहे सु
गंधिं पुष्टिवर्धनम् उर्वारुकमिव बंधनान्

त्वो मे दीर्घमामृतातु॥ इति प्रोक्षणम्॥ देव
तापूजनीयानि सौरभीयानि सांप्रतम्॥ बल्य
र्थं विष्णुपात्रेयोस्तं प्रपद्ये विष्णुमव्ययम्॥
बल्यर्थं देवदेवाग्र पवित्राणीह सिद्धये १
मूलं॥ १० तद्विष्णोः परमं पदं सदा पश्यंति सू
रयः दिवीव चक्षुराततं तद्विप्रासो विपन्य
वो जागृवांसः समिंधते विष्णोर्यत्परमं पद
म्॥ इति मुद्राप्रोक्षणम्॥ प्रथकुण्डमेल

श्री·
१००

शोधनम्। तत्र पुष्पं पुष्पेण संपीड्य पात्रान्तरे
निधाय धेनुयोनिमत्स्यमुद्रात्रयं प्रदर्श्य मूलं
दशधा जप्त्वा ऋचां पठेत्। विष्णुर्योनिं क-
ल्पयतु त्वष्टा रूपाणि पिंशतु आसिंचतु प्र-
जापतिर्धाता गर्भं दधातु ते। गर्भं देहि सिनी
वाली गर्भं देहि सरस्वति गर्भं देह्यश्विनौ दे
वा वादत्तां पुष्करस्रजम्। इति पठित्वा स्था
नार्थं रक्षितं स्थापयेत्। अथ मांसादीनाम्

परिघ्नापहारीविद्या॰ ॐ स्रुं स्लुं क्लुं म्लुं ऌं ऐंग्लुं
सः ब्रम्हते ब्रम्हतोभ्रवे ब्रम्हतेष्क्षरि ब्रम्हतंस्ला
वय २ स्वाहा २ श्रीपात्रोपरि सर्वेत्रवाङ्गमि
त्यवगुण्ठ्य॰ तालत्रयेणदिघ्नः संबध्य॰
देवीमावाह्य॰ धेनुमुद्रयाम्रतीकृत्य यो
निमुद्रांप्रदर्श्य॰ कुण्डलिन्याप्रयोगेननिः
सृतामम्रतहरिहिं योनिमुद्रोल्लासितकरेण
श्री॰ तत्रानीय॰ ब्रह्माण्डखण्डसंभूत मशेषर
१०२

सम्पूरितं आपूरितंमहापात्रं पीयूषरसमाव
ह~ इत्यभिमंत्र्य~ ऐं वस्तुते वस्तुतोऽविस्र
वेतेश्वरि वस्तुतवर्षिणि वस्तुतमावह ॐ जं
सः स्वाहा~ इत्यभिमंत्र्य~ सोः तद्रूपेलोक
रस्यंच दत्वार्घ्यै चित्स्वरूपिणि भूतापराह्
नाकारं मयिचित्स्फुरणं कुरु~ इत्यभिमं
त्र्य~ ह्सौः नमः~ इतिसंपूज्य~ पूर्वंवमुद्रां
प्रदर्श्य~ मत्स्यमुद्रयाच्छाद्य~ पात्रंदेवीरू

पंविभावयेत् ॥ इतिश्रीपात्रविधिः ॥
तेन मूलदेव्यतिरिक्ताः ऽवरणदेवतास्तर्पये
त् ॥ पूजासमर्पणादिकं मूलदेव्यास्तर्प
णं विशेषार्घ्येणैव तत्रानंगकुसुमादिप
येन्तमावरणत्रय पूजासमर्पण मर्घ्यदा
नंच सामान्यार्घ्यजलैरेव कुर्यात् ॥ ॥
तदथः पंक्त्याकारेण पाद्याचमनीय मधु
पर्कार्थं पात्रत्रयं सामान्यार्घ्य विधिनैव

श्री॰

स्थापयेत्॰ पात्रद्वयं शुद्धजलेनापूर्य॰ तृ
तीये मधुपर्कपात्रे चंदनोपुष्पं दूर्वाः पाद्य
पात्रे॰ दधिमधुघृतपूर्णे कुरानिक्षिप्य॰ आ
चमनीयपात्रे जातीफललवंगककोल
चूर्णनिक्षिप्य सामान्यार्घ्ये गंधपुष्पाक्ष
त यवकुशातिलसर्षपदूर्वानिक्षिपेत्॰
तदभावे तंडुलान्निक्षिपेत्॰ ततस्वद॰
क्षिणाग्रेप्रोक्षणीपात्रं संस्थापयेत्॰ ॥

ततोगुरुपादुकाविद्यया गुरुपात्रं बालावि
द्यया शक्तिपात्रं वटुकमंत्रेण वटुकपात्रं ॥
आत्मपात्रं आत्मविद्यया ॥ ततोबलिपात्रं
संस्थापयेत् ॥ वटुकमंत्रं ॥ ॐह्रींहंसः सो
हंस्वाहा ॥ ततः श्रोत्तल्लीपात्रोदकेन पात्रा
न्तरेलघ्रुतेन ॥ ऐं ऐं प्रथमकूटमुच्चार्य ॥
आत्मतत्वात्मनेनमः ॥ ऐं क्लीं द्वितीयं विद्या
श्री॰ तत्वात्मनेनमः ऐं सौः तृतीयं शिवतत्वा
१०३

त्मनेनमः ~ ॐ ऐं क्लीं सौः मूलं सर्वतत्त्वात्मने
नमः ~ इतिसंपूज्य ~ तेन स्वात्मानं पूजोपक
रणानि च संप्रोक्ष्य ~ तत्त्वशुद्धिं कुर्यात् ~ श्रीपा
दुर्बिंदुभि स्तत्वमुद्रया ~ ॐ प्राणापानव्यानो
दान समाना मे शुद्ध्यन्तामू ~ ज्योतिरहं विर
जा विपाप्मा भूयासं स्वाहा ~ सर्वत्र ~ ॐ पृथि
व्यप्तेजो वाय्वाकाशानि मे शुद्ध्यन्तां स्वाहा ~
ज्योतिरहं विरजा विपाप्मा भूयासं स्वाहा ~

ॐ त्वक्चक्षुर्जिह्वाघ्राणवचांसि मे शुद्ध्यन्तां स्वा
हा ॐ पाणिपादपायूपस्थ श्रोत्राणि मे शु
द्ध्यन्तां स्वाहा ॐ प्रत्यहंकार बुद्धि मनः प्रा
णानि मे शुद्ध्यन्तां स्वाहा ॐ स्पर्शरूपरसगं
धाकाशानि मे शुद्ध्यन्तां स्वाहा ॐ वायुस्ते
जः सलिलभूम्यात्मनो मे शुद्ध्यन्तां स्वाहा
ज्योतिरहं विरजा विपाप्मा भूयासं स्वाहा
श्री· इतिसप्तभिर्मंत्रैर्विंदुस्वीकारं कुर्यात् ॥
१०५

इति तनुशुद्धिः ॥ अथ योगपीठपूजा ~ तत्रा
र्घ्योदकेन सिंहासनोपरिस्थापितश्रीचक्र
मभ्युक्ष्य ~ स्ववामतः पीठोपरि ~ श्रीगुरुपा
दुकां पठित्वा ~ श्रीचिद्रूपानंदनाथस्वामि
श्रीपादुकां पूजयामि नमः ~ तर्पयामि नमः
इति संपूज्य ~ दक्षभागे ~ घं हुं गां गणपति
श्रीपादुकां पूजयामि नमः तर्पयामि नमः
इति संपूज्य ~ सर्वाधस्तादारभ्योपर्युपरि ~

घं मण्डूकाय नमः घं कालाग्निरुद्राय नमः
घं मूलप्रकृत्यै नमः घं आधारशक्त्यै नमः ~
घं कूर्माय नमः घं अनंताय नमः घं वराहा
य नमः घं पृथिव्यै नमः घं रत्नसमुद्राय न
मः घं मदिरासमुद्राय नमः घं घृतसमुद्रा
य नमः घं दुग्धसमुद्राय नमः ~ तन्मध्ये ~
अं आं इं ईं इत्यादि हं लं क्षः नवरत्नविराजि
श्री· ताय नवरत्नमय द्वीपाय नमः ~ ॥ तत्पश्चि

मे ~ घं अं आं इं ईं उं ऊं ऋं ॠं पुष्परत्नायनमः ~
नैर्ऋत्ये ~ घं ऌं ॡं एं ऐं ओं औं अं अः वैडूर्यरत्ना
यनमः ~ दक्षिणे ~ घं कं खं गं घं ङं नीलरत्नाय
नमः ~ आग्नेये ~ घं चं छं जं झं ञं विद्रुमरत्ना
यनमः ~ पूर्वे घं टं ठं डं ढं णं मौक्तिकरत्नाय
नमः ~ ईशाने ~ घं तं थं दं धं नं मरकतरत्ना
यनमः ~ उत्तरे ~ घं पं फं बं भं मं वज्ररत्ना
यनमः ~ वायव्ये ~ घं यं रं लं वं गोमेदरत्ना

यनमः ~ मध्यातले ~ घैं ष्रां घं सं हं लं त्तः प
द्मरागरत्नायनमः ~ तन्मध्यस्थलेमध्ये ~
घैं कल्पवृक्षेभ्योनमः ~ तन्मध्ये ~ घैं वसंता इन्द्रियाश्वे
दिषड्ऋतुभ्योनमः ~ तत्पश्चिमे ~ घैं इन्द्रियाश्व
भ्योनमः ~ तत्पूर्वे ~ घैं इंद्रियाश्वेगजेभ्यो
नमः ~ तन्मध्ये ~ घैं विचित्ररत्नभूमिकायै
नमः ~ तत्पश्चिमे ~ घैं कालचक्रेश्वर्यैनमः
नैर्ऋत्ये ~ महाचक्रेश्वर्यैनमः ~ दक्षिणे ~ ।

षं मातृचक्रेश्वर्यैनमः ~ आग्नेये ~ षं रत्नचक्रे
श्वर्यैनमः ~ पूर्वे षं देवताचक्रेश्वर्यैनमः ~ ईशा
ने षं गुरुचक्रेश्वर्यैनमः ~ मध्ये ~ षं मूर्तिच
क्रेश्वर्यैनमः षं करुणातोयपरिधयेनमः
षं स्वर्णाख्याकारायनमः षं तन्मध्ये ~ मणि
मण्डपायनमः ~ तस्य नैऋत्यादिकोणच
तुष्टये ~ वामावर्तेन ~ षं कालरूपिणीश्मशा ~
नैनमः ~ षं देवतारूपिणीश्मशानैनमः ~ ॥

ऐं श्रीकारत्नपिल्लीश्च क्त्यैनमः ऐं श्रीहृत्नपिल्ली
श्च क्त्यैनमः ~ मध्ये संगीतयोगिनीभ्योनमः ~
तन्मध्ये ऐं मणिमयवेदिकायैनमः ~ तदुप
रि ऐं श्वेतच्छत्रायनमः ~ तदधः ऐं रत्नसिं
हासनायनमः ~ इति संपूज्य ~ श्रीचक्राधा
र पीठरत्नसिंहासनत्वे परिकल्प्य ~ तस्यवा
यव्ये ~ ऐं धर्मायनमः ~ नैर्ऋत्ये ~ ऐं वैराग्या
यनमः ~ ऐशान्ते ~ ऐं ऐश्वर्यायनमः ~ तस्य

श्री॰
१०८

पश्चिमे ~ ॐ धं धर्माय नमः ~ दक्षे धं ज्ञाना
य नमः ~ पूर्वे धं वैराग्याय नमः उत्तरे ~
ऐश्वर्याय नमः ~ तन्मध्ये ~ मायायै नमः
धं विद्यायै नमः ~ तदुपरि ~ धं अनंताय नमः
तस्य मौलौ ~ धं पद्माय नमः धं आनंदकंदा
य नमः धं संविन्नालाय नमः धं प्रकृतिम
य पत्रेभ्यो नमः धं विकृतिमयकेसरेभ्यो न
मः धं पंचाशद्वर्णबीजाढ्य सर्वतत्त्वरूपाये

^अं अर्कमण्डलाय द्वादशकलात्मने

कालिकायेनमः ~ तस्यामेव ~ घं अं आं इं ईं
उं ऊं ऋं ॠं लृं ॡं एं ऐं ओं औं अं अः घं सं सोम
मण्डलाय षोडशकलात्मनेनमः ~ घं रं
वह्निमण्डलाय दशकलात्मनेनमः ~ घं
संप्रबोधात्मने सत्त्वायनमः घं रं प्रकृत्या
त्मने रजसेनमः ~ घं तं मोहात्मनेतमसे
नमः घं आं आत्मनेनमः घं अं अन्तरात्मने
श्री. घं पं परमात्मनेनमः घं ह्रीं ज्ञानात्मनेनमः

कर्णिकायां दिक्षु मध्ये च ~ षं ज्ञानतत्वात्मनेन
मः षं मायातत्वात्मनेनमः षं कालतत्वात्म
नेनमः षं विद्यातत्वात्मनेनमः षं परतत्वा
त्मनेनमः षं सर्वशक्तितत्वात्मनेनमः षं क
मलासनायनमः ~ स्वाग्रादिप्रादक्षिण्येन ~
षं जयायैनमः षं विजयायैनमः षं कीर्तये
नमः षं प्रीतयेनमः षं प्रभायैनमः षं प्र
ज्ञायैनमः षं मेधायैनमः षं श्रुत्यैनमः ~

इतिपत्रेषु॰ घं मूलं श्रीमहात्रिपुरसुंदर्यै न
मः॰ इतिमध्येतदुपरि श्रीचक्रं संस्थाप्य॰
मूलं श्रीमहात्रिपुरसुंदरी श्रीपादुकां पूजया
मिनमः॰ इति संपूज्य॰ मूलं ग्रं ग्रां इत्या॰
दि हंलंतः शिवशक्ति सदाशिवेश्वर शुद्ध॰
विद्या माया कला विद्याराग काल नियति
पुरुष प्रकृत्यहंकार बुद्धिमनः श्रोत्रत्व॰
श्री॰ चक्षुर्जिह्वाघ्राण वाक्पाणिपाद पायूप॰
१०६

स्य घ्राणशब्दस्पर्शौ रूपरसगंधाकाशवाय्वग्निस
लिलपृथिव्यात्मने श्रीमहात्रिपुरसुंदरी
भगवती योगपीठासनाय नमः ~ इति सम
स्तपीठं पुष्पांजलिना संपूज्य ~ ततस्तदुप
रि ~ प्रसूनतूलिकां कल्पयामीति मध्ये पु
ष्पं निक्षिप्य ~ तदुपरि ~ ऐंह्रींश्रींसौः श्री
महात्रिपुरसुंदरी भगवत्याः सकलचैत
न्यानंदमयी श्रीकामेश्वर श्रीमहात्रिपुरसुं

श्वरीमूर्तिं कल्पयामीति पुष्पादिप्रक्षेपेण ~
ध्यानोक्तां मूर्तिं भावयन् ~ शक्त्युत्थापनमु
द्रां प्रदर्श्य ~ मूलमंत्रार्ये ~ परस्यै श्रीका
मेश्वरश्रीत्रिपुरसुंदरीश्वरीसत्यैं नमः ~ इ
तिकल्पितं मूर्तिं पूजयेत् ~ इतियागपी
ठपूजाक्रमः ~ अथ श्रीचक्रपूजा ~ तत्र
प्रथमं तावद्गुरुमंत्रेण शिरसि गुरुपादुकां
श्री॰ संपूज्य ~ ॥ ॐ नमोऽस्तु गुरवे तस्मा इष्टदेव
११०

स्वरूपिणे यस्य वागमृतं हन्ति विषंसंहारसं
ज्ञकम् ॥ श्रीगुरो दक्षिणामूर्ते भक्तानुग्रह
कारक ॥ अनुज्ञां देहि भगवन् श्रीचक्रयजनाय
मे ॥ इति श्रीगुरुं प्रणम्य ॥ गुर्वाज्ञां प्राप्य ॥
मूलेन प्राणायाम ऋष्यादिकरषडंगन्या-
सान्विधाय ॥ मूलेन व्यापकं विन्यस्य ॥ क
राभ्यां पुष्पांजलिमादाय ॥ मातृकांभोज
नेन कलायित्वा ॥ त्रिखण्डमुद्रां बद्ध्वा हृदि

श्रीचक्रराजेंद्रेदेवींयथोक्तरूपांसपरिवारांध्या
त्वा तेजोरूपां प्राणायामान्तमुद्राप्रयोगेनमू
लाधारात्कुंडलिनीमुत्थाप्य ॰ तयासह
षट्चक्रभेदक्रमेण हृदयांतःस्फुरंतींतां
तेजोमयींसुषुम्णामार्गेण ब्रह्मरंध्रंनीत्वा
परातेजःसंगमेनामृतमहांबुधौ तत्र
विश्रम्य ॰ शिवशक्तिसामरस्यसुखमनु
श्री॰ भूय ॰ मूलंनमोभगवति श्रीमहात्रिपुर
२२१

सुंदरीश्वरि ॥ महापद्मवनान्तस्थे कारणानंद
विग्रहे सर्वभूतहितेमात रेह्येहि परमेश्वरि
एह्येहि देवदेवेशि त्रिपुरे देवपूजिते परा
मृतमये पूजां सान्निध्यं कुरु सिद्धिदे ॥ देवे
शिभक्तिसुलभे सर्वावरणसंवृते यावत्वां
पूजयिष्यामि तावत्वं सुस्थिरा भव ॥ इत्या
वाहनमंत्रं उच्चार्य ॥ वहन्नासापुना त्रिख
ण्डमुद्रामुद्रितकरस्थ पुष्पांजलौ तत्तेजः

समानीय॥ पीठांतः कल्पितमूर्त्तेः श्रीरस्ति
ब्रह्मरंध्रे सन्निवेशयेत्॥ ततः कामेश्वरां
कस्थां सावरणां श्रीमहात्रिपुरसुंदरीभग
वतीं सावयवभावेन भावयन्॥ मूलं श्री
मच्छ्रीकामेश्वरसहिते भगवति श्रीमहात्रि
पुरसुंदरि॰ इहागच्छ २ इह संतिष्ठ २ इह सं
निधेहि २ इह सन्निरुद्धा भव २ इह सम्मु
श्री॰ खीभव २ इहावगुण्ठिता भव २ मम सर्वा
११८

पचारसहितां अर्चां गृह्णा ८ स्वाहा । इत्या
वाहनमुद्राः प्रदर्श्य । देवांगेषु षडंगन्या
सेन सकलीकृत्य । धेनुमुद्रयामृतीकृत्य
महामुद्रया परमीकुर्यात् । मूलं सामा
न्यार्घ्येण देवीं त्रिः संप्रोक्ष्य । श्रीं ह्रीं क्लीं ग
णपकालिके सौः क्रौं ह्लीं ह्रीं श्रीं इति जीव
न्यासविद्यया देवीहृदयकमले जीवं सं
स्थाप्य । प्राणप्रतिष्ठां कुर्याद्यथा । ॥ ॥

ॐ आं ह्रीं क्रों यं रं लं वं शं षं सं हं ळं क्षः हंसः
सोहं त्रिपुरसुंदरीप्राणाः इह प्राणाः । एवं
जीवः इह स्थितः । एवं सर्वेन्द्रियाणि इह
स्थितानि । एवं वाङ्मनस्त्वक्चक्षुः श्रोत्र
घ्राणप्राणा इहागत्य सुखं चिरं तिष्ठन्तु स्वा
हा । इति लेलिहानमुद्रया प्राणप्रतिष्ठां
विधाय । दशदिग्बंधनं कृत्वा । अवगुण्ठ्य ।
श्री॰ अमृतीकृत्य सकलीकृत्य । परमीकृत्य ।
२२२

धेनुयोनीप्रदर्शये ॥ पाशांकुशौ धनुर्बाणांश्च
द्राः प्रदर्शये ॥ पुनः श्रीपात्रामृतेन सायुधां
सवाहनां सपरिकरां सावरणां श्रीमल्लीका
मेश्वरसहितां श्रीमहात्रिपुरसुंदरीभगव
तीं पूजयामि तर्पयामि नमः ॥ इतित्रिसं
तर्प्य ॥ श्रीमल्लीकामेश्वरसहिते भगवति
श्रीमहात्रिपुरसुंदरि तुभ्यमासनं क [illegible] ल्प
यामि स्वाहा ॥ इहास्य तां भवत्या ॥ इत्या

सनेसन्निवेशयेत्॥ मूलं॥ नत्वाद्यं॥ श्री
मल्लीकामेश्वरसहितायै श्रीमहात्रिपुर
सुंदरीभगवत्यैनमः॥ इतिपाद्यपात्रात्पा
द्योःपाद्यं॥ मूलं॥ श्रीमल्लीकामेश्वरस
हितायै श्रीमहात्रिपुरसुंदरीभगवत्यै॥
शिर्षेस्वाहा॥ इतिशिरस्यार्घ्यं॥ मूलंश्री
मल्लीकामेश्वरसहितायै श्रीमहात्रिपुर
श्री॰ सुंदरीभगवत्यैआचमनीयंस्वधा॥ इति
११४

मुखे आचमनीयं ~ एवं मधुपर्कं स्वधामु
ते ~ ततः स्नानमण्डपं नीत्वा आसनपूजा
कार्या ~ ततः सिंहासने समुपवेश्य पुनः
पाद्यादिभिस्संपूज्य ~ तत्र गांगोदकक्षीर
पंचगव्य पंचामृतादिभिः स्नापयेत् ~ ॥
मूलं एतत्स्नानीयम् ~ श्रीमल्लीकामेश्व
रसहिताये श्रीमहात्रिपुरसुंदरीभगव~
त्यै नमः ~ इति सर्वांगेषु स्नापय ~ ॥

ततोवैदिकैःपौराणिकैश्चमंत्रैःस्नापये
त्॥ अहंरुद्रेभिर्वसुभिश्चराम्यहमादि
त्यैरुतविश्वेदेवैः अहंमित्रावरुणोभा
बिभर्म्यहमिंद्राग्नीअहमश्विनोभा॥ अ
हंसोममहनसंबिभर्म्यहंत्वष्टारमुत
पूषणंभगम्॥ अहंदधामिद्रविणंह
विष्मतेसुप्राव्येयजमानायसुन्वते॥१
श्री॰ अहंराष्ट्रीसंगमनीवसूनां चिकितुषीप्र
२२५

षमायज्ञियानाम् ॥ तांमादेवाव्यदधुः
पुरुत्रा भूरिस्थात्रांभूर्यावेशयन्तीम् ॥
ॐ मयासोअन्नमत्तियोविपश्यति यः
प्राणितियईंशृणोत्युक्तम् ॥ अमन्तवोमां
तउपक्षियन्ति श्रुधिश्रुतश्रद्धिवन्तेवदा
मि ॥ अहमेवस्वयमिदंवदामि जुष्टं
देवेभिरुतमानुषेभिः यंकामयेतंतमु
ग्रंकृणोमि तंब्रह्माणंतमृषिंतंसुमेधाम् ॥

अहंरुद्रायधनुरातनोमि ब्रह्मद्विषेशरवे॰
हंतवाउ अहंजनायसमिदंकृणोम्यहंद्या
वापृथिवीआविवेश॰ अहंसुवेपितरमस्य
मूर्धन्ममयोनिरप्स्वन्तःसमुद्रे॰ ततोवि
तिष्ठेभुवनानिविश्वा तामूंद्यांवर्ष्मणोप
स्पृशामि॰ अहमेववातइवप्रवाम्यारभ
श्री· माणाभुवनानिविश्वा॰ परोदिवापरए
११८ नापृथिव्यैतावतीमहिनासंबभूव॰ ८

इंद्रंमित्रंवरुणमग्निमूतये मारुतंशर्धो

अदितिंहवामहे॰ रथन्नदुर्गाद्वसवस्सु

दानवो विश्वस्मान्नो अंहसो निष्पिपर्त्तन॰

तेनआदित्याआगताःसर्वतातये भूतदे

वा वृत्रतूर्येषुशंभुवः॰ रथन्नदुर्गा॰ ॥

अवंतुनःपितरःसुप्रवचना उतदेवीदे

वपुत्रे ऋतावृधा॰ रथन्नदुर्गा॰ नराशंस

वाजिनंवाजयन्निह क्षयद्वीरंपूषणंसु

ती वैरोचनीं कर्मफलेषु जुष्टाम्‌ दुर्गां दे
वीं शरणमहं प्रपद्ये सुतरसे तरसे नमः
ॐ जातवेदसे सुनवाम सोममरातीय
तो निदहाति वेदः स नः पर्षदति दुर्गा
णि विश्वा नावेव सिंधुं दुरितात्यग्निः
ततो मूलेन चरणोदकं ग्रहणीयात्‌ ॥
ततो मधुदुग्धमूलेनांगं प्रोक्ष्य अलंकारम
ग्रहंपंनीला नवविचित्रपट्टवस्त्रकंचु

म कस्तूरीचंदनसिंदूरमुकुटकुंडलहार
त्रयादि नूपुर मंजीरादिनालंकारैरलंकृत्य
पुनराचमनीयं दत्वा ॥ ततः पूजामण्ड पं
समानीय ॥ तत्रश्रीमत्कुल्लीकामेश्वरांकोप
विष्टां श्रीमहात्रिपुरसुंदरीभगवतीं ध्या
त्वा ॥ पुनः पाद्यादिमधुपर्कान्तं संपूज्य ॥
मूलं मध्यमानामांगुष्ठैः श्रीमत्कुल्लीकामे
श्री श्वरसहितायै श्रीमहात्रिपुरसुंदरीभ
११८

गवत्यै एषगंधोनमः ॥ इतितिलकंकुर्या

त् ॥ अंगुष्ठतर्जनीभ्यां ॥ मूलंश्रीमल्ली

कामेश्वरसहितायै श्रीमहात्रिपुरसुंदरी

भगवत्यै एतान्यक्षतपुष्पाणिवौषट् ॥

इत्यक्षतपुष्पैस्संपूज्य ॥ ततोधूपपात्रं ॥

वं मस्त्रायफट् ॥ इतिसामान्यार्घ्योदके

न संप्रोक्ष्य ॥ पुरतस्थापयित्वा ॥ वाम

तर्जन्या संस्पृश्यान् ॥ श्रीमात्राहृतेन धूपं

निवेदयामीतिनिवेद्य॥ ॐजगद्ध्वनिमंत्र॥
मातः स्वाहेतिघंटांसंपूज्य॥ वामेनपा
णिनातांवादयन्॥ मध्यमानामांगुष्ठैः
धूपंधृत्वा॥ गायत्रींमूलंचपठन्॥ वन
स्पतिरसोद्भूतो गंधाढ्योगंधसंयुतः॥
आघ्रेयःसर्वदेवानां धूपोयंप्रतिगृह्य
श्री ताम्॥ इतिविधिनोत्थदेवींधूपयेत्॥
११९ श्रीमहात्रिपुरसुंदरीपादुकायै धूपंपरि

कल्पयामि नमः ~ ततो दीपं संमुखे संस्था
प्य ~ गोघृतेनापूर्य कर्पूर गर्भितां वर्ति
निक्षिप्य ~ ह्रीमिति प्रज्वाल्य ~ धेनुमुद्रया
घृतीकृत्य ~ विष्णुदैवताय दीपाय नमः
पूर्ववत्प्रोक्षणपूजने कृत्वा वाममध्यमया
दीपपात्रं संस्पृशन् ~ दीपं निवेदयामी
ति निवेद्य ~ पूर्ववत् घंटां वादयन् ~ म
ध्यमानामामध्ये दीपपात्रं संगृह्य ध्यत्वा ~

गायत्रींमूलंचपठतु ॥ स्वप्रकाशोमहादी
पः सर्वतिमिरनाशकः प्रसीदममदेवेशि
दीपोयंप्रतिगृह्यताम् ॥ श्रीमहात्रिपुरसुं
दरीपादुकायैदीपंपरिकल्पयामिनमः ॥
इतिदीपमुत्सृज्य ॥ आरात्रिकांकुर्यात् ॥
ततःसुवर्णादिपात्रेकुंकुमसिंदूरचंदनादि
नावस्तपत्रंचंद्ररूपंचतुरंकृत्वा ॥ मध्येदीप
श्री· मेकंअष्टपत्रेषुदीपाष्टकंसंस्थाप्य ॥ ॥ ॥
१८०

ह्रींसौः ग्लुं स्लुं म्लुं प्लुं न्लुं सौः ह्रींरत्नेश्वर्यैनमः
इत्यभ्यर्च्य ॰ मूलेनवाभ्यर्च्य स्थालकंमस्त
कान्तमुद्धृत्य ॰ नववारंमूलंपठन् ॰ ॐसम
स्तचक्रचक्रेशी युतेदेविनवात्मिके ॰ आरा
त्रिकामिमांदेवि गृहाणममसिद्धये ॥ ॰
रतिश्रीवद्धामुद्रयानीराजयेत् ॰ ततोना
नानैवेद्यंस्वर्णादिपात्रेसंस्थाप्य ॰ हेमपा
त्रगतंदिव्यं परमान्नंसुसंस्कृतम् ॰ पंचधा

षड्रसोपेतं गृहाण परमेश्वरि ॥ नमस्कृत्य
मुद्रया ॥ ऊँमित्यवगुण्ठ्य धेनुमुद्रयामृ
तीकृत्य ॥ मूलं सप्तधा जप्त्वा ॥ वामांगुष्ठेन
नैवेद्यपात्रं स्पृष्ट्वा ॥ मूलं ॥ स्फुरत्सौरभ
निर्भरं रुचिकरं शाल्योदनं निर्मलमू यु
क्तं हिंगुमरीचजीरसुरभि द्रव्यान्वितैर्व्यं
ञ्जनैः पक्वान्नेन सपायसेन मधुना द
श्री· ध्याज्यसम्मिश्रितं नैवेद्यं सुरसुंदरीविर
२५१

चितं श्रीसुंदरित्वन्मुदे ॥ श्रीमल्लीकामेश्वरस
हिताये श्रीमहात्रिपुरसुंदर्यै अंबिकायैश्री
षोडशाक्षर्यै चतुर्भुजायै जगदंबिकायै
पाशाय अंकुशाय धनुषे बाणाय इन्द्र
शक्तये अग्निशक्तये यमशक्तये निर्ऋतिश
क्तये वरुणशक्तये वायुशक्तये कुबेरशक्त
ये ईशानशक्तये ब्रह्मशक्तये अनंतशक्त
ये वज्रशक्तये शक्तिशक्तये दण्डशक्तये

खड्गशक्तये पाशशक्तये ध्वजशक्तये गदा
शक्तये त्रिशूलशक्तये पद्मशक्तये हलश
क्तये चक्रशक्तये ठः ठः ठः इत्यनूपिलो-
ऽमृतं गृहाण नमः ~ अत्यन्नममृतं नैवेद्यं
निवेदयामि नमः ~ मूलमष्टधा पठेत् ~॥
दत्त्वा नामांगुष्ठाभ्यामुत्सृजेत् ~ पुनः पात्रा
न्तर जलममृतीकृत्य ~ अमृतोपस्तरण
श्री मसीतिस्वाहा ~ इत्याचमनीयं दत्त्वा ग्रास
२२८

मुद्राः प्रदर्शयेत् ॥ ॐ प्राणाय स्वाहा ॥ ॐ अपा
नाय स्वाहा ॐ व्यानाय स्वाहा ॐ उदानाय
स्वाहा ॐ समानाय स्वाहा ॥ इति ग्रासमुद्राः
प्रदर्श्य कृतांजलिः ॥ मूलं ऐं आत्मतत्त्वव्या
पिका श्रीमहात्रिपुरसुंदरी देवीं तृप्यतु ॥ १
मूलं क्लीं विद्यातत्त्वव्यापिका श्रीमहात्रिपु
रसुंदरी देवीं तृप्यतु ॥ मूलं सौः शिवतत्त्व
व्यापिका श्रीमहात्रिपुरसुंदरी देवीं तृप्यतु ॥

मूलं ऐं क्लीं सौः सर्वतन्त्रव्यापिका श्रीमहा-
त्रिपुरसुंदरीदेवीतृप्यतु ॥ इति तन्त्रैश्रीसर्व
तुहृदयं आह्लादयित्वा ॥ प्रस्तावयफट्टिति जव
निकया भोजनस्थले संवेश्य श्रीपरदेव
तां भुंजानां ध्यायन् स्वान्तं वादयन् ॥ ॥
ॐ ब्रह्मेशाद्यैः सरससमाभक्तः सूपविष्टे
स्तामं ता द्विं ज द वा लव्यजननिकरैवीज्य
श्री॰ मानासखीभिः नर्मक्रीडाप्रहसनपरा-
१५३

पंक्तिभोक्तान्रूसंती भुंक्ते पात्रे कनकवटिते
षड्रसां [illegible] द्विलासा ~ इतिभुंजानां ध्यात्वा
मूलं दृष्ट्वा ध्याजप्त्वा ~ भुक्तवती सुत्दृप्तां देवी
विभाव्य ~ पात्रान्तरजलमहृतीशत्य ~
गृहताधिधानमसिस्वाहा ~ इतिदेव्या
हस्ते उत्तरापोषणं दत्वा गतसारं नैवेद्यं ~
समुद्धृत्य तस्मात्किंचित् ~ ऐं उच्छिष्टमा
तंगिन्यै नमः ~ प्रोक्षिकार्यै निर्माल्यावासिन्यै

इदं उच्छिष्टभोजनं कल्पयामि नमः इत्येष्टा
न्यां त्रिकोणे क्षिपेत् ॥ ततः प्रक्षालय फट् इति
प्रोक्षणाभिः स्थानं संशोध्य हस्तमुखप्र
क्षालनार्थं जलमुद्वर्तनादि च दत्त्वा तस्या
स्तरणौ प्रक्षाल्याचमनीयं दत्त्वा तांबूलं
प्रोक्ष्य ॥ वनस्पतिदेवताय तांबूलाय नमः
इति संपूज्य ॥ मूलं श्रीमहात्रिपुरसुंदरि
भगवति ॥ तांबूलदलकर्पूर पूगभागात

श्री·
१८७

रंगितमू ~ संशोधितं सुसुगंधं तांबूलं प्रति
गृह्यतामू ~ ॐ हं हं हं रदं रदं रदं गृहाणस्वा
हा ~ इति देव्यै तांबूलं निवेद्य ~ संतोभि
(र्या) ष्टा

द्रियो दशमुद्राः प्रदर्श्य ~ योनिं हृदि ~
तोभिणीं मुखे द्राविणीं भ्रूमध्ये प्रावर्षि
णीं ललाटे वशिनीं ब्रह्मरंध्रे ~ आह्लादि
नीं पंचमुद्रामयीं प्रदर्श्य कृतांजलिः ~
मूलं श्रीमहात्रिपुरसुंदरि ~ संविद्विषयो
स्म

